आरंभसिद्धिनामकोऽस्य ग्रन्थस्य सुधीशृङ्गारापराभिधं वार्तिकं श्रीहेमहंसगणिभिर्वाचनाचार्यैः प्रणीतं । ते च तपागच्छसंस्थापकानां निजतीव्रतपोभिस्तपाचार्येत्याविभासमानानां श्रीमन्नृपतिविक्रमार्कस्य त्रयोदश्यां शताब्द्यां भारते विहरतां श्रीजगच्चन्द्रसूरीणां शिष्याम्नाये समभूवन्निति ग्रन्थान्ते उल्लिखितं प्रतीयते । वार्तिकमिदं ग्रन्थकर्त्राशयसमुद्घाटकं मुहूर्तेषु तत्कर्मसु च विविधग्रन्थोक्तिभिर्विविधशास्त्रीय गुणदोषपरिज्ञापकं बहुबहुवैकल्पिकाभिप्रायप्रमाणप्रतिपादकं यथार्थावबोधकं ज्योतिःशास्त्रसम्प्रदायानुसारि विरचितं तदभ्यासासक्तजनोपकृतये तैः श्रीहेमहंसगणिभिः ।

सर्वारंभविधेः सिद्धिकरत्वात् 'आरंभसिद्धि' इति सार्थकाभिधानस्यास्य ग्रन्थस्य चरमभागे स्वाभिप्रायनिबद्धकानि पद्यानि प्रणीय ग्रन्थकर्तृभिर्ग्रन्थस्यास्य प्रयोजनं फलमुपयोगिता च सर्वं प्रतिपादितं । तत्र तद्धृदयरूपमिदं पद्यं यथा—

किंचित् केचिदपि क्वचित् क्वचिदपि ग्रन्थ विशेषा मया,
दृष्टा ज्योतिषगोचराः किल समुच्चेतुं च ते चिन्तिताः ।
प्रक्रान्तस्तु समुच्चयो रचयितुं संवर्धमानः पुनः,
सोऽर्थैरेव शनैः शनैः समभवद् ग्रन्थानुरूपाकृतिः ॥ १ ॥"

कस्यापि सा यस्य सिद्धिर्विना विमर्शं न भवतीत्यालोचनादारंभसिद्धिग्रन्थे विविधविषयसूचकाः संगृहीताः पञ्च विमर्शाः प्रकरणस्थाने नियोजिताः ।

प्रथमे तिथिवारभयोगपरीक्षात्मके विमर्शे ग्रन्थस्याभिधेयसम्बन्धप्रयोजनान्युक्त्वा चत्वारि तिथ्यादिद्वाराणि प्रतिपादितानि । तिथिद्वारे शुभाशुभतिथिस्वरूपं, दग्धतिथिनिषिद्धकर्मप्रादिस्व रूपं तत्तत्स्थापनान्याससहितं विवेचितं । वारद्वारे वारप्रवेशकालहोरावारगतकुलिककालकुलिकयमकण्टकार्धप्रहरादिस्वरूपं विविधस्थापनान्यासयुतं प्रदर्शितं । भद्वारे नक्षत्रनामानि तद्गुणरूपेण नामकरणा स्वरूपं, नक्षत्रेशाः, नक्षत्रतारकसंख्या नक्षत्रविशेषा नक्षत्राणां चन्द्रेण योगे मुहूर्तसंख्या इत्यादि निरूपितं । योगद्वारे वारनक्षत्रानुसारेण विविधाः शुभाशुभयोगास्तत्स्थापनान्यासश्च, क्रमगत्य-न्यविधिगतग्रन्थनक्षत्रवर्गसंख्याया स्थापना, तेषां आपवादापवादविवेचनं, शुभाशुभफलनिर्देशः वियोगोऽपि योगानां स्वरूपं, उपयोगक्रमस्थापना, शुभाशुभयोगगर्तं, दिनयोगाः ध्रुवयोगानां स्वरूपं तत्स्थापना सप्तशलाकाचक्रेण पञ्चशलाकाचक्रेण च वेधयोगाः, कर्तरीयोगपातयोगस्वरूपं इत्यादि सविस्तरं प्ररूपितं ।

द्वितीये राशिगोचरपरीक्षात्मके विमर्शे द्वारद्वयं निरूपितं । तत्र राशिद्वारे राशिवर्णाः, राशिशीलानि राशीनामुच्चनीचपरमोच्चपरमनीचस्वरूपं तत्स्थापना राशीसंज्ञाः द्वादशभावाः भावानां नामान्तराणि राशीनां चतुर्गाः षड्वर्गस्वामिनः वर्गस्वामिनः राशिभोक्तृप्रमाणानां प्रभेदः ग्रहाणां च दीप्तं बलं ग्रहदृष्टिनिरूपणं ग्रहाणां शत्रुमित्रमध्यस्थत्वस्वरूपं, राशिस्थग्रहाणां मिथोवेधस्वरूपं, इत्यादि सम्पूर्णं स्थापनान्याससहितं निरूपितं । गोचरद्वारे—गोचरफलानि, चन्द्रस्य बलाबलं, तारास्वरूपं, चन्द्रावस्थाः शनेः पृथग् नक्षत्रगमनं, ग्रहयुद्धस्वरूपं ग्रहास्तमनानि ग्रहोदयावेधः ग्रहशान्ति-प्रयोगः इत्यादि सविस्तरं सस्थापनं प्रतिपादितं ।

तृतीये कार्यपरीक्षात्मके विमर्शे कार्यद्वारमेकमेव निरूपितं । तत्र कार्यद्वारे कार्यभेदाम् नक्षत्राणां भेदाः, तत्र कर्तव्याः कार्यविशेषाः, मूलपुरुषा, जन्मादीनक्षत्रभेदाः, ताराणां कुलगतिसंज्ञा, रविनरस्वरूपं, नक्षत्रविधाविनाशप्रयोजनं, योनिवैरं, नक्षत्रगणाः, राशीनां मिथो वैरमैत्र्यादि, नाडीवेधः, तारामैत्री, वर्गमैत्री, पूर्वोक्तकन्यावरसंबन्धे मिथो सम्बन्धेयत्नार्थं, नक्षत्रयोनिविशेषफलकार्यान्तराणि, घोरमाभिश्च वर्जनीयानि विभागाभिसर्गादिकम्, कृषिपुरुषस्वरूपं, हलचक्रं, विविधकार्यविचारः इत्यादि सम्यक्पूर्वं, तत्तत्स्थापनमनुपम निरूपितं ।

चतुर्थे गमवास्तुप्रवेशपरीक्षात्मके विमर्शे गमवास्तुप्रवेशाभिधं द्वारद्वयं, तत्र गमद्वारे प्रस्थानविधिः, प्रस्थानसमयशुद्धिः, नक्षत्रविशेषाधाराये दिशोद्धारनियमः, परिघस्वरूपं, दिग्विशेषशूलस्वरूपं, योगिनीचारः, पाशकालस्वरूपं, राहुचारस्वरूपं, वत्सचारस्वरूपं, समयशुद्धिविशुद्धिस्वरूपं, दुर्भिक्षलक्षणं, तत्परिहारः, यात्राकालस्वरूपं, यात्रायां होरादिवर्गचक्रं, तत्फलं, यात्रायां शकुनमालाः, यात्रायां ग्रहविचारः, यात्रोचितग्रहयोगाः, राजयोगस्वरूपं, दिक्शुद्धिचक्रं, दिग्विभागचक्रं इत्यादि निरूपितं । वास्तुद्वारे भावादीनि, भावाधानयने करणस्वरूपं, भेदज्ञापनं, प्रस्तारप्रकारः, षोडशमहीपतिविनायोत्पत्तिः, वास्तुनि चन्द्रचक्रं, वास्तुप्रारंभ मासाः, क्रमनारम्भप्रकारः, गृहनिवेशे छायचक्रं, छायादोषस्वरूपं, नव्यगृहे प्रवेशविधिः, वारादिकथनं, इत्यादि सर्वं ग्रन्थान्तरप्रमाणैः सविस्तरं निरूपितं ।

पञ्चमे विलग्नमिश्रद्वारपरीक्षात्मके विमर्शे विलग्नमिश्राभिधं द्वारद्वयं । तत्र विलग्नद्वारे सौरचान्द्रमासस्वरूपं, लग्नगुणदोषविवेचनं इत्यादि निरूपितं । मिश्रद्वारे ग्रहगोचरशुद्धिस्वरूपं, दिनशुद्धिस्वरूपं, विवाहनक्षत्रेषु विशेषः, नक्षत्राणां दोषप्रकारः, अशुभग्रहाणां शुभत्वोपायः, वेधशुद्धिः, वर्गांशनियमः, दीक्षायां वर्गांशाः, विवाहे लग्नांशादिस्वरूपं, सर्वकार्यसाधारणविचारः, व्यतिपातादिदोषस्य भङ्गः, दीक्षायां चन्द्रस्य पुष्टेः फलं, दीक्षाकर्मण्यसाधारणी शुभमुहूर्तसंख्या, विवाहकर्मण्यसाधारणी मुहूर्तसंख्या, विवाहकर्मणि विशेषाः, सर्वकार्यसाधारणा शुभाशुभयोगाः, दुर्योगस्वरूपं, प्रतिष्ठाकर्मणि रेखा शुभमुहूर्तसंख्या, प्रतिष्ठाकर्मणि विशेषाः, सर्वकाले शुभग्रहाणां बलविचारः, शुभग्रहाणां दोषैः शक्तिः, चर स्थिरद्वयी, लग्नस्य मानं, राशिषु संज्ञाविशेषाः, तत्प्रमाणानि, द्वादशसंक्रान्तीनामन्तरसम्पदाः, लग्नात् कालानयनं, कालात् लग्नानयनं, विवाहे गोधूलिलग्नस्वरूपं, छायालग्नमुखलग्नस्वरूपं, राज्याभिषेके गुणदोषकथनं, इत्यादि स्थापनापूर्वं निरूपितं । तदा पञ्चमविमर्शान्ते सकलग्रन्थार्थसमर्थमाय पद्यैकं कथयित्वा ज्योतिषार्णवनिर्मथनरूपोऽयं ग्रन्थः समाप्तिं गमितो ग्रन्थकारैः ।

तदा प्रशस्तौ वार्त्तिककाराः प्रस्तावितग्रन्थ परम्परां स्वीयां 'श्रीमच्चन्द्रकुले' इति वाक्येन विचक्षणचन्द्रकुलीनत्वमात्मनो ग्रन्थप्रणेतुणां पाण्डित्यप्रकर्षं एतद्ग्रन्थोपयोगित्वं ग्रन्थकृदभिप्रायं च ।

ग्रन्थोऽयं विविधैरनेकैर्लिखितपुस्तकैः सम्यक् संशोधितोऽपि यत्र कुत्रापि मानुषमेधुषीसुलभानि स्खलितानि दृष्टिगोचराणि भवेयुस्तानि क्षाम्यन्तु विद्वांस इति प्रार्थयते विदुषान्, आशास्ते च ज्योतिषाब्धिरत्नकार्यविचारिभिर्ग्रन्थमस्यादरपोषयोस्य ग्रन्थे निर्मत्सरा विषयित इति ।

भाद्रपदे विक्रमसंवत् १९७१ }
मार्गशीर्षशुक्लपूर्णिमायां }

श्रीजैनसङ्घोपासकः
गोपालमारवाडज्ञ पुरुषोत्तमदासः

आरंभसिद्धिनाम्नोऽस्य ग्रन्थस्य सुधीशृङ्गाराभिधं वार्तिकं श्रीहेमहंसगणिभिर्वाचनाचार्यैः प्रणीतं । ते च तपागच्छसंस्थापकानां विश्वविश्रुततपोभिस्तपाचार्येत्याख्यातिमवाप्तानां श्रीमन्नृपविक्रमार्कस्य त्रयोदश्यां शताब्द्यां भारते विहरतां श्रीजगच्चन्द्रसूरीणां शिष्यान्वये समभूवन्निति ग्रन्थान्ते तत्प्रशस्तित प्रतीयते । वार्तिकमिदं ग्रन्थकर्त्राशयप्रस्फुटप्रकाशकं मुहूर्तेषु तत्क्रमेषु च विविधग्रन्थोक्तिभिर्विहितालाप प्रत्युत्तरनिर्णायक बहुबहुश्रुताभिप्रायप्रमाणप्रतिपादकं यथार्थबोधकं ज्योतिःशास्त्रसम्प्रदायानुसारि विरचितं तदभ्यासोत्सुकजनोपकृतये तैः श्रीहेमहंसगणिभिः ।

सर्वारंभविधेः सिद्धिकरणाद् 'आरंभसिद्धि' इति सार्थकाभिधानस्यास्य ग्रन्थस्य चरमभागे स्वाभिप्रायनिदर्शकानि पद्यानि प्रणीय ग्रन्थकर्तृभिर्ग्रन्थस्यास्य प्रयोजनं फलमुपवर्णितं च सर्वं प्रतिपादितं । तत्र सङ्ग्रहरूपमिदं पद्यं यथा—

"केचित् केचिदपि क्वचित् क्वचिदपि ग्रन्थे विशेषा मया,
दृष्टा ज्योतिषगोचराः किल समुच्चेतुं न ते चिन्तिता ।
प्रक्रान्तश्च समुच्चयो रचयितु संवर्द्धमानः पुनः
सोऽभूदिव शनैः शनैः समभवद् ग्रन्थानुरूपाकृतिः ॥ १ ॥"

कस्यापि शास्त्रस्य सिद्धिर्विना विमर्शं न भवतीत्याशयेनात्रारंभसिद्धिग्रन्थे विविधविषयसूचकाः सङ्गृहीताः पञ्च विमर्शाः प्रकरणस्थाने नियोजिताः ।

प्रथमे तिथिवारनक्षत्रयोगपरीक्षात्मके विमर्शे ग्रन्थस्याभिधेयसम्बन्धप्रयोजनान्युक्त्वा चत्वारि तिथ्यादिद्वाराणि प्रतिपादितानि । तिथिद्वारे शुभाशुभतिथिस्वरूपं दग्धतिथिनिषिद्धकरणभद्रादिस्वरूपं तत्तत्स्थापनाय यन्त्रसहितं विवेचितं । वारद्वारे वारप्रवेशकालहोरावारगतकुलिकोपकुलिकयमघण्टकार्धयामप्रहरादिस्वरूपं विविधस्थापनायन्त्रयुतं प्रदर्शितं । भद्वारे नक्षत्रनामानि तदनुसारेण नामकरणाक्षरचक्रं, नक्षत्रेशाः, नक्षत्रतारकसंख्या नक्षत्रविशेषाः नक्षत्राणां चन्द्रेण योगः मुहूर्तसञ्ज्ञा इत्यादि निरूपितं । योगद्वारे वारनक्षत्रानुसारेण विविधाः शुभाशुभयोगास्तत्स्थापनायन्त्रं, आनन्दाद्यष्टाविंशतियोगान्तर्गतरवियोगानां स्थापना तेषां साम्यासाम्यविवेचनं, शुभाशुभफलनिर्देशः निषेधोपयोगानां स्वरूपं, उपयोगक्रमस्थापना, शुभाशुभयोगनक्षत्रदिनयोगाः कुयोगानां त्याज्यत्वम् पञ्चर्क्षकयोगस्वरूपं तत्स्थापना सप्तशलाकाचक्रेण पञ्चशलाकाचक्रेण च वेधप्ररूपणा, क्रान्तिसाम्ययोगस्वरूपं इत्यादि सविस्तरं प्ररूपितं ।

द्वितीये राशिगोचरपरीक्षात्मके विमर्शे द्वारद्वयं निरूपितं । तत्र राशिद्वारे राशिधर्माः, राशिसञ्ज्ञानि राशीनामुच्चनीचपरमोच्चपरमनीचस्वरूपं तत्स्थापना राशीसञ्ज्ञाः द्वादशभावाः भावानां नामान्यपि राशीनां षड्वर्गाः षड्वर्गस्वामिनः तदुपस्वामिनः राशिभोक्तृग्रहाणां प्रभेदः ग्रहाणां च दृष्टिः वक्रं ग्रहराशिनिरूपणं ग्रहाणां शत्रुमित्रमध्यस्थत्वस्वरूपं, राशिस्थग्रहाणां मिथोवेधस्वरूपं, इत्यादि समग्रं स्थापनायन्त्रसहितं निरूपितं । गोचरद्वारे—गोचरफलानि, चन्द्रस्य बलाबलं, ताराबलस्वरूपं, चन्द्रावस्था शनेः पृथग् नक्षत्रप्रचारं, ग्रहयुद्धस्वरूपं ग्रहवक्रमार्गौ ग्रहफलभेदाः ग्रहशान्तिप्रयोगः इत्यादि सविस्तरं तत्स्थापनं प्रतिपादितं ।

२ । ममभिम्यादिः ३ । योगः सिद्धियोगादिः ४ । राशिर्मेषादिः ५ । गोरिव चरणं 'चरे राजस्व-गुरौ' इति प्रमाणवे गोचर्यं, पूर्वपूर्वराशित उत्तरोत्तरराशिसंचरणं महाणामित्यर्थः ६ । कर्म विवा-रम्भादि ७ । गमो यात्रा ८ । वास्तु गृहादिप्रासादादि, तत्सम्बन्धात्तद्वेशोऽप्यत्र ९ । इह च गमवा-स्तुरूपं द्वारद्वयं बहुवक्तव्यतया कार्यप्राधान्यात् पृथगुपन्यस्तं । विलग्नं लग्नादिकालाकोरकादिः १० । निमुहूर्तमनुकूलमुहूर्ताविकाव्यसम्पद्वरूपं ११ । एतैर्द्वारैः शास्तीति सम्बन्धः ॥

तत्रादौ तिथिमाह—

नन्दा भद्रा जया रिक्ता पूर्णा चेति त्रिरन्विता ।
हीना मध्योत्तमा शुक्ला कृष्णा तु व्यत्ययात्तिथिः ॥३॥

व्याख्या—" त्रिरिति ' नन्दा भद्रेत्याद्यास्तिथयः पञ्चदशतिथिषु त्रीन् वारान् कार्याः । एवं च प्रतिपत्षष्ठ्येकादश्यो नन्दा । द्वितीयासप्तमीद्वादश्यो भद्रा । तृतीयाष्टमीत्रयोदश्यो जयाः । चतुर्थीनवमीचतुर्दश्यो रिक्ता । पञ्चमीदशमीपञ्चदश्यः पूर्णा इति सिद्धं । एषां नाम्ना किं प्रयोजनमित्याशङ्कायामाह—" अन्वितेति ' सान्वया नामानुरूपं फलमासा-मित्यर्थः । अत्र एवाह श्रीपतिः—' चित्रोत्सवावास्तुमैत्रमुत्यादि आनन्दकरं कर्म नन्दासु ? । विवाहभूषाशकटाध्ययानशान्तिकपौष्टिकादि भद्रस्य कर्म भद्रासु २ । समानसैन्याभियोगाय जय-कर्म जयासु ३ । बधबन्धघातविषाग्निशस्त्रादि रिक्तकर्मैव रिक्तासु नान्यत् किमपि ४ । विवाह-दीक्षायात्रादि मङ्गलस्य कर्म पूर्णासु ५ कुर्वं सिध्यति । सामान्येन तु दर्शरिक्ताष्टवर्जं प्रायः सर्वासु शुभं कर्म कुर्यात् । दर्शे च तत्तिथिनिषिद्धादवस्त्रकल्पव्यापारकर्म न कार्यं " । अतएवाह—' सुर्ये-न्त्रमन्त्ररक्षादीक्षासुत्रेषु कर्मसु स्नाने रिक्तादर्शाष्टम्यः शस्ता इति " । " हीना मध्योत्तमा शुक्ले-त्यादि " शुक्लपक्षे आद्या पञ्चदशी हीना द्वितीया मध्या, तृतीया उत्तमा । कृष्णपक्षे तु व्य-त्यय, कथं ? आद्या पञ्चदशी उत्तमा द्वितीया मध्या तृतीया हीनेति । ति चेरिति सर्वत्र विशेष्यं योज्य । तिथीशाश्चैव रत्नमालोक्ताः—

तिथिनाथानुर्गुरुत्त १ विधाता २ विष्णवो ३, यम ४ शीतदीधितिः ५ विशाख ६ वासवः ७ ।
वसु ८ नाग ९ धर्मं १ शिव ११ तिग्मरश्मयो १२ मदन १३ कलि १४ स्तद्वत् विश्व १५ तृप्सरिताः १६
तिथी ति दर्शसंज्ञके पितृगुरुसम्बन्धीवराद् अधीशपतिमूर्तयो स्यतस्तु चित्रयोऽदरैः ॥ २ ॥
वह्नि १ विरञ्चो २ गिरिजा ३ गणेशः ४ फणी ५ विशाखो ६ दिवाक ७ महेशः ८ ।
दुर्गा ९ न्तको १ विश्व ११ हरि १२ स्मरस्य १३ सर्व १४ शशी १५ चेति पुराणदृष्टाः ॥ ३ ॥

एषां देवानां प्रतिष्ठादौ च तत्तत्तिथीनामुपयोग । एवमेव वक्ष्यमाणनक्षत्रकरणग्रहेशानामपीति रत्नमालामाष्ये । जिनस्य तु प्रतिष्ठायां सर्वेऽपि तिथिनक्षत्रकरणगणाः शुभत्वे सत्युपयोगिन एव तस्य सर्वदेवाधिदेवत्वात् ॥

अथ कुतिथीराह—

रिक्ता ४-९-१४ षष्ठ्यष्टमीद्वादश्यमावास्या शुभे त्यजेत् ।
स्वीकुर्याश्चरमां क्वापि न प्रवेशप्रवासयो ॥ ४ ॥

व्याख्या— 'शुभे इति" सौम्ये कार्ये । अमावास्यां तत्सुमतिम्यादिषु विशिष्य त्यजति । "प्रवासेति" आसां सर्वासामपि प्रवेशप्रवासयोस्त्याज्यत्वात् ।

पञ्चदशी च, मकरे द्वादशी पञ्चदशी च, कुम्भे त्रयोदशी पञ्चदशी च, मीने चतुर्दशी पञ्चदशी च त्याज्या। क्रूरयुक्तस्येत्यत्र सारम्भार्थं व्याख्येयं, तथा केनचित् क्रूरेणाक्रान्ता मेषाद्या राशयस्तेन तत्रैव तेषु यथोक्तास्तिथयः क्रूराः, सौम्ययुतेन तु क्रूरेण शुभा एवेत्यर्थः। यस्य नामराशिः क्रूरेणाक्रान्तोऽस्ति तस्य पुंसः शुभकार्ये तद्राशिसंबन्धिनी सा सा तिथिस्त्याज्येत्येके। अन्ये त्वाहुः—मेषे १—५ इति कोऽर्थः? मेषे क्रूराक्रान्ते सति प्रतिपत्पञ्चम्योराद्याः पञ्चदश घट्यस्त्याज्याः। वृषे २—५ द्वितीयापञ्चम्योर्द्वितीयाः पञ्चदश घट्यः। मिथुने ३—५ तृतीयापञ्चम्योस्तृतीयाः पञ्चदश घट्यः। कर्के ४—५ चतुर्थीपञ्चम्योस्तुर्याः पञ्चदश घट्य। एवं सिंहादिचतुष्कपञ्चमादिचतुष्कयोरपि॥

तिथिनियतानि करणान्याह—

करणान्यथ शकुनि १ चतुष्पद २ नागानि ३ क्रमाच्च किंस्तुघ्नम् १४।
असितचतुर्दश्यथासितपर्वसु ध्रुवाणि चत्वारि॥९॥

व्याख्या—यथा यावत्प्रमाणा तिथिस्तथा तदर्धमानानि सर्वकरणानि, तिथ्यर्धमिति वचनात्। असितेत्यादि कृष्णचतुर्दशीरात्रौ शकुनि अमावास्यायां दिवा चतुष्पदं, रात्रौ नागं, शुक्लप्रतिपदि दिवा किंस्तुघ्नं। ध्रुवाणीति नियतस्थानत्वात्।

अथ बव १ बालव २ कौलव ३ तैतिल ४ गर ५ वणिज ६ विष्टय ७ सप्त।
मासेऽष्टशश्चराणि स्युरुज्ज्वलप्रतिपदन्त्यार्धात्॥१०॥

व्याख्या—चराणीति प्रतिमासमष्टकृत्व आवृत्तेः। तथाहि—शुक्लप्रतिपद्रात्रौ बवं, द्वितीयायां दिवा बालवं रात्रौ कौलवं, तृतीयायां दिवा तैतिलं स्त्रीविलोचनापराख्यं, रात्रौ गरं, चतुर्थ्यां दिवा वणिजं, तद्रात्रौ विष्टिर्भद्रा इति भद्रापरनाम। एवं द्वितीयाद्यावृत्तयो निष्पन्ना ज्ञेयाः। यथा—पञ्चम्यां दिवा बव रात्रौ बालवं, यावत् शुक्लाष्टम्यां दिवा विष्टिः २। पुनस्तद्रात्रौ बवं, नवम्यां दिवा बालवं, यावच्छुक्लैकादश्यां रात्रौ विष्टिः ३। पुनर्द्वादश्यां दिवा बव, यावत्पूर्णिमायां दिवा विष्टिः ४। पुनस्तद्रात्रौ बवं, कृष्णप्रतिपदि दिवा बालवं यावत्कृष्णतृतीयायां रात्रौ विष्टिः ५। पुनश्चतुर्थ्यां दिवा बव यावत्सप्तम्यां दिवा विष्टिः ६। पुनस्तद्रात्रौ बवं, यावत्कृष्णदशम्यां रात्रौ विष्टिः ७। पुनरेकादश्यां दिवा बवं, यावच्चतुर्दश्यां दिवा विष्टि ८ रित्यष्टमावृत्तौ शुभेष्वमुभिः करणैः सह मासपूर्तिः। इह च तारादिरूपतिथिमानस्य पूर्वोत्तरार्धे एव दिनरात्री ज्ञेये। एतत्स्वामिनो यथा—

"इन्द्रो १ विधि २ मित्रा ३ र्यम ४ भू ५ श्री ६ यमका बवादेषु करणेषु।
कलि १ वृष २ फणि ३ मरुत ४ पुनरीशा क्रमशः स्थिरेषु स्युः॥१॥"

अत्र यमको यमः स भद्रायाः स्वामी॥

चरामूनि विविष्टीनि दिष्टान्यखिलकर्मसु।
रात्र्यहर्व्यत्ययाद्भद्राऽप्यदुष्टेति तद्विदः॥११॥

व्याख्या— विविष्टीनीति कोऽर्थः? एकादशसु करणेषु भद्रा दुष्टा। यतः—

"यदि भद्राकृतं कार्यं प्रमादादपि सिध्यति।
प्राप्ते तु षोडशे मासे समूलं तद्विनश्यति॥१॥"

कुलिकयोस्तु घटी २ पल १५ अक्षर १२। एवं सर्वमासेऽप्यूह्यं। विशेषस्तु—कुलिकसमये किमपि कर्म न कार्यं यदुक्तं—

"छिन्नं भिन्नं वर्द्धं प्रदग्धं पन्नगादिभिर्दष्टम्।
नाशमुपयाति विषवत् सर्वं कर्मोत्थवदपि तत्र" ॥ १ ॥

इति व्यवहारप्रकाश। तथेदमपि—

"सोमे भानौ कुजे चैव गुरावपि च राक्षसा।
शुक्रे भानौ शनौ रौद्रो मुहूर्त्ताः कुलिकोपमाः" ॥ २ ॥

अत्र भानौ इति प्रसंगेनैव, एवं चैत्रादिष्वपि च वर्ज्यं। मासरन्ध्रादिविभागस्तु मुहूर्त्तनामभे चौरा मिश्रके वक्ष्यते। अथ च मुहूर्त्तकुलिकोऽहोरात्रे द्विः स्यात् दिवा रात्रौ च। अर्धयामादयस्तु दिनपतिसम्बन्धादिवैव स्यु न तु रात्रौ। नारचन्द्रे तु—स्वस्थानात् सम्यग्वर्धिर्दिनार्द्धांशः कुलिकाख्ये नार्थादिवारेषु सप्तपद्षष्ठचतुर्थित्रपञ्चसंख्या दिनार्द्धांशाः कुलिकसंज्ञा इत्युक्तं। सर्वेषां चैषां क्रमात् स्थापना—

| वारा | रवि | चन्द्र | मंगल | बुध | गुरु | शुक्र | शनि | |
|---|---|---|---|---|---|---|---|---|
| दिवा | ४ | ७ | २ | | | ३ | ६ | अर्धयाम |
| दिवा | | ३ | ६ | १ | ४ | ७ | २ | कालवेला |
| दिवा | ३ | २ | १ | ७ | ६ | ५ | ४ | कण्टक |
| दिवा | ५ | ४ | ३ | २ | १ | ७ | ६ | उपकुलिक |
| दिवा | | ६ | ५ | ४ | ३ | २ | १ | कुलिक |
| दिवा | १४ | १२ | १ | | ६ | ४ | २ | मुहूर्त |
| रात्री | १३ | ११ | ९ | | ५ | ३ | १ | कुलिक |

अथ दिवा दिनार्द्धांशसमानमेव कुलिकं नारचन्द्रोक्तं प्रमाणयन् वारेषु शुभेष्टा आह—

भानोर्भू१ नयन२ तत्त्व ६ सितरुचे शीतांशु१ पञ्चा५ष्टमा८,
भौमस्याब्धि४ नगा७ ष्टमा ८ शशितनूजस्य त्रि३ तर्का६ ष्टमाः८।
जीवस्य द्वि२ शरा५ द्रयो७ भृगुभुवश्चन्द्रा१ ब्धि४ पश्चा६ ष्टमा ८,
शौरेस्त्री३ षु५ नगा७ ष्टमाश्च८ दिवसेष्वेतेऽष्टमांशाः शुभा ॥५१॥

व्याख्या—भूरेका नयने द्वे, तत्त्वानि पट् शीतांशुरेकः पञ्च अष्टमस्वास्ते, नगा सप्त तर्काः पट्, इपवः पञ्च शेषं स्पष्टं। भानोरिति रविवारे आद्यद्वितीयषष्ठचतुर्थस्थानि शुभानि, शेषाणां १–४–५–७–८ अर्धयामादिभिर्मलत्वात्। एवममेऽपि सोमे आद्यपञ्चमाष्टमानि शुभानि। भौमे चतुर्थसप्तमाष्टमानि। बुधे तृतीयषष्ठाष्टमानि। गुरौ द्वितीयपञ्चमसप्तमानि। शुक्रे आद्यचतुर्थषष्ठाष्टमानि। शनौ तृतीयपञ्चमसप्तमाष्टमानीति। दिवसे इति पदे रात्रिषु न व्यवस्थितमत्र इति भावः। अष्टमांशाः प्रागुक्तेऽभिसन्धिः प्राग्वत्॥

वारेषु च्छायाबलमाह—

सिद्धच्छाया क्रमादर्कादिषु सिद्धिप्रदा पदे ।

व्याख्या—यदा टिप्पनके पाताद् योग सत्यपादाया लिखितः स्यात्तदा तस्यान्त्यः पादस्तु स्तुमानेन मान्यः, सामान्येन तु पञ्चदश पल्यः, योगमिति, यत्र सर्वा पक्षेमविधाविवर्जितेय । व्यतीपात विमारिषु तुल्यावाविचतुष्टयोपयोगैः मार्गलादिपञ्चमिभिर्दूष्यते, परं तयोत्तराय श्रामवणयोः पञ्चदश चतस्रश्च घटीर्वर्जयित्वैव पादचतुष्कं कल्पनीय । वचनत्वापवेक्षणादन्यत्राभिजिन्मतेप्युच्यते इति च सामर्थ्योदन्यते ॥

नक्षत्रदेवताः अहाभिधानाह—

नेशास्त्वश्वि१ यमा२ ग्नि ३ कमलभू४ श्चन्द्रो५ऽथ रुद्रो६ऽदिति७-
र्जीवो८ऽहि ९ पितरो१०भगो११ऽर्यम१२रवी१३ त्वष्टा१४ समीर१५स्तथा ।
शक्राग्नी१६ अथ मित्र१७इन्द्र१८निर्ऋती१९वारीणि२० विश्वे२१ विधि२२
र्वैकुण्ठो२३वसवो२४ऽम्बुपो२५ऽजचरणो२६ऽहिर्बुध्न्य२७पूषाभिधौ२८॥३१॥

व्याख्या—अश्विनौ दस्रावश्विदेवौ । कमलभूर्ब्रह्मा । अदितिर्देवमाता । जीवो गुरुः । अहिः सर्पः । भगो योनिः । अर्यमा सूर्यभेदः । त्वष्टा विश्वकर्मा । समीरो वायुः । शक्राग्नी इति विशाखाया आद्येऽर्धे इन्द्रोऽपरार्धेऽग्निर्देवता, अत एवास्या द्विदैवतसंज्ञा मिश्रसंज्ञा च । अत एवोक्तं दैवज्ञवल्लभे—"पूर्वार्धे मृदुकर्म चास्य सकलं तीक्ष्णं द्वितीये दले" इति । मित्रः सूर्यभेदः । निर्ऋतिः राक्षसो माता, तत्सम्बन्धात्तस्या अप्यत्र कल्पना, तेन मूलो रक्षोनक्षत्रमित्युच्यते । वारीणि जलं । विश्वे इति विश्वाख्याः समयोदश देवाः, सर्वादित्वाच्छस इः । नन्वत्र संज्ञावाचिनो विश्वशब्दस्य कथं सर्वादित्वं सर्वनाम्नां सर्वादित्वविधानात् ? उच्यते—छान्दसोऽयं प्रयोगस्तेन संज्ञायामपि सर्वादित्वं । विधिर्ब्रह्मा । वैकुण्ठो विष्णुः । वसवोऽष्टौ, यदुक्तं—

'धरो ध्रुवश्च सोमश्च आपश्चैव अनलोऽनिलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ १ ॥'

अम्बुपो वरुणः अजचरणः अजपादपि अभिहितो एकपादस्यो देवः । रुद्राणामन्यतमोऽजपादः । अहिर्बुध्न्यो रुद्रभेदः । यदाहुः—

'अजपादोऽहिर्बुध्न्यः पिनाकी चापराजितः ।
शम्भुः कपर्दी मृगव्याधः कपाली त्र्यम्बको भवः ॥' १ ॥

इत्येकादश रुद्रनामानि । पूषा रविभेदः । यदाहुः—"धातृ १ अर्यमन् २ मित्र३ वरुणः ४ अंशु५ भग ६ इन्द्र७ विवस्वन्८ पूषन्९ पर्जन्य१० त्वष्ट११ विष्णु१२ संज्ञा द्वादश सूर्याः" इति । शेषा यथोपलक्ष्या देवभेदाः । प्रयोजनं चैषां तद्देवतानाम्ना नक्षत्रव्यवहारादि ॥

नक्षत्रदेवताभोनां तारकसंख्यामाह—

त्रि३ त्र्य२ ङ्क६ भूत५ अगवि३ न्दु१ कृत४ त्रि३ तर्के६-
ष्व५ क्षि२ द्वि२ पंच५ कु१ कु१ वेद४ युगा४ ग्नि३ रुद्रैः ११ ।
वेदा४ ब्धि४ राम३ गुण३ वेद४ शत१०० द्विक२ द्वि२-
दन्तैश्च३२ सत्समतिथिर्न शुभा भतारैः ॥ ३२ ॥

व्याख्या-अश्विन्यां त्रयस्तारकाः, भरण्यां त्रय इत्यादि । मङ्गानि क्रिया १ कस्य १ व्याकरण ३ अस्त्वा ४ ज्योति ५ निरुक्त ६ स्थानि षट् । जगन्ति त्रीणि । कृत्येति चत्वारः, कृतयुगस्य तुर्येरनाम् । अश्विनी नेत्रे द्वे । कुर्मूरेख । युगानि चत्वारि । वज्र पञ्चदश । रामात्रयः । गुणाः सत्त्वादयस्त्रय । दन्ता द्वात्रिंशत् । शेषं स्पष्टं । स्थापना-

| भेषु | तारा | भेषु | तारा | भेषु | तारा | भेषु | तारा |
|---|---|---|---|---|---|---|---|
| अश्विनी – ३ | | पुष्य | ३ | स्वाति | १ | अभिजित् | ३ |
| भरणी – ३ | | अश्लेषा | ६ | विशाखा | ४ | श्रवण | ३ |
| कृत्तिका – ६ | | मघा | ५ | अनुराधा | ४ | धनिष्ठा | ४ |
| रोहिणी – ५ | | पूर्वाफल्गुनी | २ | ज्येष्ठा | ३ | शतभिषा १ | |
| मृगशिर – ३ | | उत्तराफल्गुनी | २ | मूल | ११ | पूर्वाभाद्रपद | २ |
| आर्द्रा – १ | | हस्त | ५ | पूर्वाषाढा | ४ | उत्तराभाद्रपद | २ |
| पुनर्वसु – ४ | | चित्रा | १ | उत्तराषाढा | ४ | रेवती | ३२ |

तारकसङ्ख्योक्तेः प्रयोजनमाह– तारसमेत्यादि धिष्ण्यैर्धिष्ण्योक्तैर्मतारैर्भस्य समा तिथिर्न शुभेति ज्ञेयं । कोऽर्थः ! सर्वेषु भेषु तत्तारासङ्ख्यया तिथिस्त्याज्या, यथा तृतीयाऽश्विनीयुक्ता त्याज्येत्यादि । नवरं शतभिषाभि सर्व तारा' शतम्य तिथिभि पञ्चदशभिर्भाग हृत्वा दशेति दशमी शतभिषग्युता त्याज्या । एवं रेवत्यां द्वात्रिंशत्ताराः पञ्चदशभक्ता शेषं द्वे द्वितीया रेवतीयुता त्याज्या । यदुक्तः–"दग्धा धिष्ण्यभत्रतारातुल्या तिथिर्भनेत् " इति । विशेषस्तु–' तारासमैरुडोभिर्मासैरब्दैश्च धिष्ण्यफलपाकः इति " श्लक्ष्णः ॥

भानां संज्ञाविशेषानाह–

चरमाद्युमलं स्वातिरादित्यं श्रवणत्रयम् ।
लघु क्षिप्रं च हस्तोऽश्विन्यभिजित् पुष्य एव च ॥२३॥
मृदु मैत्रं मृगश्चित्राऽनुराधा चैव रेवती ।
ध्रुवं स्थिरं च वैरञ्चमुत्तरात्रितयान्वितम् ॥२४॥
दारुणं तीक्ष्णमश्लेषा मूलमार्द्रामहेन्द्रभम् ।
क्रूरमुग्रं च भरणी तिस्रः पूर्वा मघान्विताः ॥२५॥
मिश्रं साधारणं च द्वे विशाखाकृत्तिकाभिधे ।
ईदृग्भाग्भोचिते धिष्ण्ये निर्मितं कर्म शर्मणे ॥२६॥

व्याख्या—चरं चलमिति नामद्वयं एवमग्रेऽपि सर्वाण्यपि च चरचलचरलघुक्षिप्रसाधारणनामान्यत्र अवदर्शनानि, चरं सप्तम । आदित्यं पुनर्वसु । श्रवणत्रयं श्रवणधनिष्ठाशतभिषजः । वैरञ्चं रोहिणी उत्तरात्रयमुत्तराफल्गुन्युत्तराषाढोत्तरभाद्रपदाः । महेन्द्रभं ज्येष्ठा । तिस्रः पूर्वाः पूर्वाफल्गुनीपूर्वाषाढापूर्वभाद्रपदाः । साधारणमिति न स्थिरं न चरं न तीक्ष्णं न मृदु इत्यर्थः । भानां प्रयोजनमाह–ईदृगित्यादि ईदृशेन धिष्ण्यनाम्ना कर्मणाऽनुरूपे भ । कोऽर्थः ! यादृशं भस्य नाम तादृशं कर्म तत्र मे शर्मम ॥

पतदेवाह—

कुर्यात्प्रयाणं लघुभिश्चरैश्च, मृदुध्रुवे शान्तिकमाजिमुग्रैः ।
व्याधिप्रतीकारमुशन्ति तीक्ष्णैर्मिश्रैश्च मिश्रं विधिमामनन्ति ॥३७॥

व्याख्या—प्रयाणमिति पण्यभूषणकलारतौषधज्ञानविज्ञानवाहनोपानिकादुपाकर्म, एवमन्येऽपि, शान्तिकमिति बीजगृहनगरग्रामप्राकारभूषणगीतमङ्गलमित्रकार्याणि स्थिरकर्म च । आजिमिति वधननाविषपातबन्धनोच्छेदनसर्वाभिचारकर्माण्यपि । व्याधीति मूलपद्ममन्त्रभिषिसाधनमेदकर्माण्यपि । उशन्ति वाञ्छन्ति । मिश्रमिति साधारण । एतं रजतताम्रलोहाद्यभिकर्म सर्वं तथा वृषोत्सर्गाग्निपरि ग्रहादि च विशेषास्तु—

"एद् चरेषु नारंभी ग्रमारिएषे सर्व चरे ।
धुवे पुरप्रवेशादि मिसरससधिविर्व करे" ॥१॥

इति दिनशुद्धिग्रन्थे । तथा—

तीक्ष्णोग्रमोक्ष विदधीत मिश्रे क्रूरोदितं दारुणमेषु कुर्यात् ।
तीक्ष्णोग्रमिश्रैर्यदिहोदितं तन्मृदुध्रुवैः क्षिप्रचरैर्न कुर्यात् ॥१॥
मापः शान्ते कार्ये न योजयेत्क्षुप्रिकादिपूर्वाम ।
दारुणरौद्रे च तथा द्विदैवतं दाम्यसर्पेशाम् ॥२॥

तथा— स्थिर१ चर२ लघुग्रम३ मिश्रौ४ लघु५ उग्रौ मृदु६ ।
तीक्ष्णम७ ऋक्षिता वाराः प्रार्कै सूर्यादयः क्रमात् ॥१॥

अत्र प्रयोजन तु चराविसेन सहस्रानां वाराणां नानां च योगः प्रयाणादौ विधित्वप्रयोजक इति ॥

सप्तविंशतेर्भानां चन्द्रेण भोग मुहूर्तसङ्ख्यामाह—

भेषु क्षणान् पञ्चदशेन्द्ररौद्रनायव्यसार्पान्तकवारुणेषु ।
त्रिघ्नान् विशाखादितिभध्रुवेषु शेषेषु तु त्रिंशतमामनन्ति ॥३८॥

व्याख्या—क्षणा मुहूर्ताः । ऐन्द्रं ज्येष्ठा । रौद्रमार्द्रा । वायव्यं स्वातिः । सार्पमश्लेषा । अन्तकं भरणी । वारुणं शतभिषक् । एतानि षड्भानि पञ्चदशमुहूर्तान्यर्धदिनभोगानीत्यर्थः । त्रिघ्नानिति एव पञ्चदश त्रिगुणाः पञ्चचत्वारिंशत् अदितिर्भं पुनर्वसु षड्भानि पञ्चचत्वारिंशन्मुहूर्तानि सार्धदिनभोगानि । शेषाण्यश्विनी१ कृत्तिका२ मृगशिरः३ पुष्य४ मघा५ पूर्वफाल्गुनी६ हस्त७ चित्रा८ अनुराधा९ मूल१० पूर्वाषाढा११ श्रवण१२ धनिष्ठा१३ पूर्वभाद्रपदा१४ रेवत्या१५ ख्यानि पञ्चदश भानि त्रिंशन्मुहूर्तानि एकदिनभोगानि । एषां चिह्न चिरंतनमहर्षि-प्रणीतेष्वेव मुहूर्तग्रन्थेषु न तु यथाऽधुना सर्वाण्यप्येकदिनभोगानीति श्रीमद्भावनन्दकृतादशोपपत्तिटिप्पनके, एषां नक्षत्रचन्द्र-वर्णनादावुपयोगः । तथाहि—

"गुरुमु३५ बालं कुरुते समर्थं प्रवृत्त१५ विष्णवऽभ्युदिते महार्घम् ।
समेषु३ त्रिष्वेषु समं दिनेषु शुक्लद्वितीयाम्युदयो विलोक्य" ॥१॥

इति रत्नमालायां । अत्राभ्युदित इति चमत्कारस्यमन्त्रो दृष्टोचतिंशत्यमधन्त्रं इत्यादि विचा र्यमिति तट्टीकायां । विशेषास्तु—

इति व्यवहारसारे।

॥ इति मद्दारम् ॥ ३ ॥



## ॥ अथ योगः ॥ ४

तत्रादौ रव्यादिसप्तवारेषु प्रत्येकं शुभाशुभयोगज्ञापकाश्चतुर्दश श्लोका इमे—

भानौ मूले कराश्विष्यपौष्णब्राह्ममृगोत्तराः ।
पुष्यमूलाश्विवासव्यश्चैकाष्टनवमी तिथिः ॥ ३९ ॥

व्याख्या—मूले शुभयोगा इत्यर्थः। करो हस्तः, पौष्णं रेवती, ब्राह्मं रोहिणी, उत्तरास्तिस्रः, वासवी धनिष्ठा। नवमीति एकाष्टनवमसङ्ख्याको द्वन्द्वं कृत्वा ततः पूरणे मट्प्रत्ययः, एवमन्यत्रापि यथायोगं अनुसार्यं। इह वारनक्षत्रयोर्वारतिथ्योर्वा द्विकशुभयोगः, वारतिथीनां तु त्रिकशुभयोगः। एवं कुयोगेऽपि वाच्यम् ॥

न चार्के वारुणं याम्यं विशाखात्रितयं मघा ।
तिथिः षट्सप्तरुद्रा११ र्क१२ मनु१४ सख्या तथेष्यते ॥४०॥

व्याख्या—याम्यं भरणी। विशाखात्रितयमिति विशाखादित्रयेण चार्कादुत्पातमृत्युकाणाः कुयोगाः स्युः। एवमग्रेऽपि कुयोगत्रयं नक्षत्रत्रयसम्बन्धेऽपूर्वं। मनवश्चतुर्दश नेष्यते इति कुयोगत्वे तिथि ज्ञेया ॥

सोमे सिद्ध्यै मृगब्राह्ममैत्राण्यार्यमणं करः ।
श्रुतिः शतभिषक् पुष्यस्तिथिस्तु द्विनवाभिधा ॥४१॥

व्याख्या—मैत्रमनुराधा भं तु मृदुनक्षत्राणि, मृगमार्गशीर्षोक्तेः, एवमग्रेऽपि यथासम्भवं विचार्यं। आर्यमणं उत्तरफल्गुनी। श्रुतिः श्रवणः (ण) ॥

न चन्द्रे वासवाषाढात्रयार्द्राश्विद्विदैवतम् ।
सिद्ध्यै चित्रा च सप्तम्येकादश्यादित्रयं तथा ॥४२॥

व्याख्या—आषाढात्रयं पूर्वाषाढोत्तराषाढाभिजित्, द्विदैवतं विशाखा ॥

भौमेऽश्विपौष्णाहिर्बुध्न्यमूलराधार्यमाग्निभम् ।
मृगः पुष्यस्तथाऽश्लेषा जया षष्ठी च सिद्धये ॥४३॥

व्याख्या—आहिर्बुध्न्यमुत्तरभाद्रपदा, राधा विशाखा, अर्यमणमुत्तरफल्गुनी, अग्निभं कृत्तिका। जया तिथिः ३-८-१३ रूपा, एवमग्रेऽपि तिथिसंज्ञायाम् ॥

न भौमे धोत्तराषाढामघार्द्रावासवत्रयम् ।
प्रतिपद्दशमीरुद्रप्रमिता च मता तिथिः ॥ ४४ ॥
बुधे मैत्रं श्रुतिज्येष्ठा पुष्यहस्ताग्निभत्रयम् ।
पूर्वाषाढार्यमर्क्षे च तिथिर्भद्रा च भूतये ॥ ४५ ॥

व्याख्या—अत्रापि मैत्रमनुराधैव प्रयत्नेन पृथग्भगं उक्तः ॥

न बुधे वासवाश्लेषारेवतीत्रयवारुणम् ।
चित्रा मूलं तिथिर्नेष्टा जया३—८—१३के११न्द्र१४नवा९न्विता ॥४६॥

व्याख्या—इन्द्राङ्किता तिथिश्चतुर्दशी ॥

गुरौ पुष्याश्विनादित्यपूर्वा३श्लेषाश्च वासवम् ।
पौष्णं स्वातित्रयं सिद्ध्यै पूर्णा ५—१०—१५ ऽथैकादशी तथा ॥४७॥

व्याख्या—पूर्वास्तिस्रोऽपि । पञ्चमेऽपि ॥

न गुरौ वारुणाग्नेयचतुष्कार्यमणद्वयम् ।
ज्येष्ठा भूत्यै तथा भद्रा २—७—१२ तुर्या षष्ठ्यष्टमी तिथिः ॥४८॥

व्याख्या—आग्नेयं कृत्तिकाचतुष्कं तत्र रोहिण्यादित्रयमेवोत्पातादिवर्ज्यं कृत्तिका तु वर्ज्यैव, “ गुरौ शतभिषजा वर्ज्यः ” इति तु हर्षप्रकाशे ॥

शुक्रे पौष्णाश्विनाषाढा मैत्रं मार्गं श्रुतिद्वयम् ।
पौनादित्ये करो नन्दा १—६—११ त्रयोदश्यौ च सिद्धये ॥४९॥

व्याख्या—अषाढाद्वयेन पूर्वोत्तराषाढे, मार्गं मृगशिरः पौर्वं पूर्वफल्गुनी ॥

न शुक्रे भूतये ब्राह्मपुष्यं सार्पं मघाऽभिजित् ।
ज्येष्ठा च द्वित्रिसप्तम्यो रिक्ताख्या ४—९—१४ स्तिथयस्तथा ॥५०॥

व्याख्या—पुष्यापेक्षिणि कर्मणोत्पातादिवर्जम् ॥

शनौ ब्राह्मश्रुतिद्वन्द्वाश्विमरुद्गुरुमित्रभम् ।
मघा शतभिषक् सिद्ध्यै रिक्ता ४ ९ १४ ऽष्टम्यौ तिथी तथा ॥५१॥

व्याख्या—मरुद्भं स्वातिः, गुरुभं पुष्यः, मित्रभमनुराधा ॥

न शनौ रेवती सिद्ध्यै वैश्वमार्यमणत्रयम् ।
पूर्वा३मृगश्च पूर्णाख्या ५—१०—१५ तिथिः षष्ठी च सप्तमी ॥५२॥

व्याख्या—वैश्वमुत्तराषाढा । अत्र विशेषः—सुयोगस्यापवादो व्यस्तैः—

‘ हस्त१ सौम्या२ श्विनी३ मैत्र४ पुष्य५ पौष्ण६ विरिञ्चिभैः७ ।
भवत्यमृतसिद्ध्याख्यो योगः सूर्यादिवारगैः ” ॥ १ ॥

व्याख्या– कुजाद्यन्यतर(म)वारे अश्व्याद्यैरष्टन्तरितैरिति अश्विनी१ रोहिणी२ पुनर्वसु३ मघा४ हस्त५ विशाखा६ मूल७ श्रवण८ पूर्वभद्रपदा९ न्यतर(म)ेन नन्द्याद्यन्यतर(म) तिथौ कुमारयोगः । अयं विशिष्य स्थिरकर्मणि मैत्रीदीक्षाव्रतविद्यासिस्यमदलोदौ गृहप्रवेशे च शुभ । अयं च विरुद्धयोगाभावे वजयता भाव्यः । तेन भौम दशमी पूर्वभद्रपदा च, सोमे एकादशी विशाखा च, बुधे प्रतिपन्मूलम श्विनी वा शुक्र रोहिणी, एव कुमारयोगा अपि नेष्टाः यथासम्भवं कर्कसंवर्तककालयमघटयोगोत्पत्ते रिति श्रीहरिभद्रसूरिकृते लग्नशुद्धिप्रकरणे ॥

राजयोगो भरण्याद्यैर्द्व्यन्तरैर्भै शुभावह ।
भद्रातृतीयाराकासु कुजज्ञमृगुभानुषु ॥ ५४ ॥

व्याख्या–द्व्यन्तरैरिति भरणी१ मृगशिरः२ पुष्य३ पूर्वफल्गुनी४ चित्रा५ नुराधा६ पूर्वाषाढा७ धनिष्ठा८ उत्तरभद्रपदा९ न्यतरमे भद्रान्यतरतिथौ कुजाद्यन्यतरवारे राजयोग । अथ लग्नशुद्धिप्रकरण स्वधर्मपौष्टिकभूषणक्षेत्रारभादिषु विशिष्य श्रेष्ठः तत्रयोगनामाप्ययमिति पूर्वभद्रः । अयमपि विरुद्धयोगोत्पत्तिं वर्जयता भाव्य इति संभाव्यते । तेन रवौ सप्तमी द्वादशी वा भरणी च, भौमे धनिष्ठा, बुधे भरणी धनिष्ठा वा, शुक्रे द्वितीया सप्तमी वा पुष्यश्च, एते राजयोगा अपि नेष्टा, यथासंभवं संवर्तककर्कवज्रमुसलोत्पातकाणादियोगोत्पत्ते ॥

स्थिरयोग शुभो रोगोच्छेदादौ शनिजीवयो ।
त्रयोदश्य१३ ष्ट८ रिक्तासु४–९–१४ द्व्यन्तरैः कृत्तिकादिभे ॥५५॥

व्याख्या–अष्टम्या वपक्ष्यर्ण, शनौ जीवे वा त्रयोदश्याद्यन्यतरतिथौ द्व्यन्तरैरिति कृत्तिका१ ऽऽर्द्रा२ ऽश्लेषा३ उत्तरफल्गुनी४ स्वाति५ ज्येष्ठा६ उत्तराषाढा७ शतभिषा८ रेवत्य९ न्यतरेण स्थिरयोगः रोगोच्छेदादाविति उक्तं च पाकश्रियां—

अवसान–किक–थाद्दि–रिसं ति–रस दिवे कसालाए चंप ।
कयपम्मो थिरजोगे वसम व करणं सुभी भणि ' ॥ १ ॥

अस्याय भावः–स्थिरयोगो दुष्टानामनो नोचिकत्से, स्थिरं क्षेत्रं गृहं च, व्याधिनाश्यरिपव उच्छेद्या, पुष्टिस्थायिपुरूष्णगत्याभित्रपच्छेयूच्छेदादि च कार्यमिति । अयं च रवेबिरयागनामापि । तथाऽयं योगोऽतिशुभोऽन्नार्थमितरात्, समानानिनिवर्तकप्राकार्येषेव मध्यो मान्येषु ॥

यमलाख्यो द्विपादर्क्षे त्रिपादर्क्षे त्रिपुष्कर ।
जीवारशनिवारेषु योगो भद्रातिथौ स्मृत ॥ ५६ ॥

व्याख्या–येषां द्वौ द्वौ पादौ पूर्वोत्तरराशिस्थौ तानि मृगशिर१ चित्रा२ धनिष्ठा३ इत्यानि त्रीणि भानि द्विपादानि । येषां तु त्रयः पादाः पूर्वस्मिन्नुत्तरस्मिन् वा राशौ स्थिताः तानि कृत्तिका१ पुनर्वसु२ उत्तरफल्गुनी३ विशाखा४ उत्तराषाढा५ पूर्वभद्रपदा६ इत्यानि षड् भानि त्रिपादानि । जीवाद्यन्यतरवारे भद्रातिथौ चेद्द्विपादं भं तदा यमलनामा योगः। तेष्वेव वारतिथिषु यदि त्रिपादं भं तदा त्रिपुष्करयोगः ॥

प्रवासो१६ मरणं१७ व्याधिः१८ सिद्धि १९ शूल२० मृतौ२१ तथा॥६६॥
मुसलो२२ गज२३ मातङ्गौ२४ राक्षसो२५ऽथ चरः२६ स्थिर २७ ।
वर्धमान२८ श्चेति नाम्ना स्युरष्टाविंशति क्रमात् ॥ ६७ ॥

व्याख्या—उपयोगानां क्रमात्स्थापना यथा—

| | रवि | सोम | मंगल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|---|
| १ आनंद | अश्विनी | मृगशिर | आश्लेषा | हस्त | अनुराधा | उत्तराषाढा | शतभिषा |
| २ कालदंड | भरणी | आर्द्रा | मघा | चित्रा | ज्येष्ठा | अभिजित् | पूर्वाभाद्रपद |
| ३ प्राजापत्य | कृत्तिका | पुनर्वसु | पूर्वाफाल्गुनी | स्वाति | मूल | श्रवण | उत्तराभाद्रपद |
| ४ सुरोत्तम | रोहिणी | पुष्य | उत्तराफाल्गुनी | विशाखा | पूर्वाषाढा | धनिष्ठा | रेवती |
| ५ सौम्य | मृगशिर | आश्लेषा | हस्त | अनुराधा | उत्तराषाढा | शतभिषा | अश्विनी |
| ६ ध्वांक्ष | आर्द्रा | मघा | चित्रा | ज्येष्ठा | अभिजित् | पूर्वाभाद्रपद | भरणी |
| ७ ध्वज | पुनर्वसु | पूर्वाफाल्गुनी | स्वाति | मूल | श्रवण | उत्तराभाद्रपद | कृत्तिका |
| ८ श्रीवत्स | पुष्य | उत्तराफाल्गुनी | विशाखा | पूर्वाषाढा | धनिष्ठा | रेवती | रोहिणी |
| ९ वज्र | आश्लेषा | हस्त | अनुराधा | उत्तराषाढा | शतभिषा | अश्विनी | मृगशिर |
| १० मुद्गर | मघा | चित्रा | ज्येष्ठा | अभिजित् | पूर्वाभाद्रपद | भरणी | आर्द्रा |
| ११ छत्र | पूर्वाफाल्गुनी | स्वाति | मूल | श्रवण | उत्तराभाद्रपद | कृत्तिका | पुनर्वसु |
| १२ मित्र | उत्तराफाल्गुनी | विशाखा | पूर्वाषाढा | धनिष्ठा | रेवती | रोहिणी | पुष्य |
| १३ मनोज्ञ | हस्त | अनुराधा | उत्तराषाढा | शतभिषा | अश्विनी | मृगशिर | आश्लेषा |
| १४ कंप | चित्रा | ज्येष्ठा | अभिजित् | पूर्वाभाद्रपद | भरणी | आर्द्रा | मघा |
| १५ लुंबक | स्वाति | मूल | श्रवण | उत्तराभाद्रपद | कृत्तिका | पुनर्वसु | पूर्वाफाल्गुनी |
| १६ प्रवास | विशाखा | पूर्वाषाढा | धनिष्ठा | रेवती | रोहिणी | पुष्य | उत्तराफाल्गुनी |
| १७ मरण | अनुराधा | उत्तराषाढा | शतभिषा | अश्विनी | मृगशिर | आश्लेषा | हस्त |
| १८ व्याधि | ज्येष्ठा | अभिजित् | पूर्वाभाद्रपद | भरणी | आर्द्रा | मघा | चित्रा |
| १९ सिद्धि | मूल | श्रवण | उत्तराभाद्रपद | कृत्तिका | पुनर्वसु | पूर्वाफाल्गुनी | स्वाति |
| २० शूल | पूर्वाषाढा | धनिष्ठा | रेवती | रोहिणी | पुष्य | उत्तराफाल्गुनी | विशाखा |
| २१ अमृत | उत्तराषाढा | शतभिषा | अश्विनी | मृगशिर | आश्लेषा | हस्त | अनुराधा |
| २२ मुसल | अभिजित् | पूर्वाभाद्रपद | भरणी | आर्द्रा | मघा | चित्रा | ज्येष्ठा |
| २३ गज | श्रवण | उत्तराभाद्रपद | कृत्तिका | पुनर्वसु | पूर्वाफाल्गुनी | स्वाति | मूल |
| २४ मातंग | धनिष्ठा | रेवती | रोहिणी | पुष्य | उत्तराफाल्गुनी | विशाखा | पूर्वाषाढा |
| २५ राक्षस | शतभिषक् | अश्विनी | मृगशिर | आश्लेषा | हस्त | अनुराधा | उत्तराषाढा |
| २६ चर | पूर्वाभाद्रपद | भरणी | आर्द्रा | मघा | चित्रा | ज्येष्ठा | अभिजित् |
| २७ स्थिर | उत्तराभाद्रपद | कृत्तिका | पुनर्वसु | पूर्वाफाल्गुनी | स्वाति | मूल | श्रवण |
| २८ वर्धमान | रेवती | रोहिणी | पुष्य | उत्तराफाल्गुनी | विशाखा | पूर्वाषाढा | धनिष्ठा |

एषां फलं नामसदृशं व्यक्तमिति न पृथक् प्रदर्श्यते । केचित् प्राजापत्य१ सुरोत्तम२ मनोज्ञादिषु/ शूल९ गजानां१ क्रमेण धूम१ प्रजापति२ मानस३ पद्म४ लुम्बको५ त्पात६ मृत्यु७ काण८ शुभ९ गद१० संज्ञाः प्राहुः । उपयोगसंज्ञा नाम्ना अमीषां निर्णयस्तद्योगमर्मीप एव सत्त्वाभावात् ॥

कुयोगेष्वपवादमाह—

यत्प्रातिकूल्यं वाराणां तिथिनक्षत्रसम्भवम् ।
हूणवंगखसेष्वेव तत्त्यजेदिति केचन ॥ ६७ ॥

व्याख्या—तिथिवारमर्दं यथा संवर्तकादियोगादौ । नक्षत्रमर्दं यथा उत्पातमृत्युकाणयोगयो-गादौ । तृणाया देशविशेषाः । केचनेति सर्वं भाव एव स्थिरकार्यं विना सर्वेष्वपि कर्मस्वेते त्याज्याः ॥

शुभाशुभयोगसंकरे शुभयोगप्राबल्यमाह—

सिद्धियोगः कुयोगश्च जायेतां युगपद्यदि ।
कुयोगं तत्र निर्जित्य सिद्धियोगो विजृम्भते ॥ ६८ ॥

व्याख्या—ये विरुद्धनामानः कुयोगाः सर्वोऽपि सिद्धियोगस्तद्धनात्र मान्यः ॥

अथ विष्कम्भादियोगानाह—

विष्कंभ १ प्रीति२ रायुष्मान्३ सौभाग्यः४ शोभन५ स्तथा ।
अतिगंडः६ सुकर्मा७ च धृतिः८ शूल९ स्तथैव च ॥ ६९ ॥
गंडो१० वृद्धि११ ध्रुव१२ श्चैव व्याघातो१३ हर्षण१४ स्तथा ।
वज्र१५ सिद्धि१६ र्व्यतीपातो१७ वरीयान्१८ परिघ १९ शिवः२० ॥७०॥
सिद्ध २१ साध्य २२ शुभ २३ शुक्लो२४ ब्रह्मा२५ चेन्द्रो२६ऽथ वैधृत २७।
इति सान्वर्थनामानो योगाः स्यु सप्तविंशति ॥ ७१ ॥

व्याख्या—स्पष्टा । किंचात्र

' [illegible] ॥ १ ॥

इति आरम्भटिप्पनके ॥

अथ कुयोगानां कुफलत्वमाह—

व्यतिपातवैधृताख्यौ सकलौ परिघस्य पूर्वमर्धं च ।
प्रथम पादोऽन्येष्वपि विरुद्धसंज्ञेषु हातव्य ॥ ७२ ॥

व्याख्या—पूर्वार्धे पादम टिप्पनकलिखितवास्तवप्रमाणापेक्षया निर्णयः । विरुद्धसंज्ञेष्विति विविध कर्म आपमानं स्पर्द्धीति विष्कम्भ कुघ्नपरिधिर्वैरस्यः ताद्दशी संज्ञा येषां ते विष्कम्भगंडादि गंडमृत्युव्याघातवज्रपातेषु ॥

प्रथमः पाद इति यदुक्तं तत्र प्रकारान्तरमाह—

त्यजेद्धा पञ्च विष्कम्भे षट् तु गण्डातिगण्डयो ।
घटिका सप्त शूले तु नव व्याघातवज्रयो ॥ ७३ ॥

व्याख्या—स्पष्टः ।

विष्कम्भादिकुयोगेष्वेवं गंडवैधृतयोरपि सिद्धिमाह—

एकार्गलः कुयोगेषु चन्द्रेऽर्के च परस्परात् ।

बुधविनाशी१ मालो२ कुजमामावात् मर्दः विद्वद्वेऽपं५ ।
गुरु१ शुक्र२ शिख३ शशि४ रवि५ इत्यरिपत्रेषु मरणमेषु ॥ १ ॥

इह च वृद्धाः प्राहुः—"सौम्यकराः किल स्वस्वरोपाः, मरण हि सौम्यत्वमेव ताः कुर्युः, क्रूरकरास्तु मरणदुरितादिनाऽन्यथा" । केशवार्कोऽप्याह—

ग्रहाणि निर्दिष्टे शुभकरतया, न कर्मास्ति परस्य गतत्वया ।
अशुभेऽपि गमति बहुधोर्ध्वं शुभाशुभावकरं परम् " ॥ १ ॥

ग्रन्थान्तरे त्वमूये—

'सौम्यकरताद्युतं पातोत्पन्नद्वयेन दूषितम् ।
गपार्द्ध वर्जयेदेव भं च केन्द्रे च नेष्पशुभा' ॥ १ ॥

अस्यार्थ भाव'—यदि तात्कालिककार्ये लग्न केन्द्र शुभग्रहाः स्युस्तदा सौम्यग्रहकरा पापान्वरिता न दुष्यति केन्द्रेषु शुभग्रहाभावे तु सौम्यकरताद्युतमपि भं सपूर्णमपि त्याज्य, एवमुपग्रहपातादिदुष्टेऽपि भे वाच्यम् ॥

पातयोगमाह—

भात सूर्यर्क्षतोऽश्लेषा मघा चित्रानुराधिका ।
श्रुति पौष्ण च यत्र स्युस्त्याज्यस्तत्सख्यभेऽश्विभात् ॥८२॥

व्याख्या—इष्टदिने यत्र भेऽर्कः स्यात्तस्मादश्लेषाप्रभृतीनि यत्र सङ्ख्यामां स्युः, कोऽर्थः ? यावन्त्यानि स्यु' अश्विनीतो गणनया तावतीषेषु धिष्ण्येषु पातः स्यात् । अस्य त्रिशूकपात इति नामान्तरं । भावना यथा—यदा सूर्यः ज्येष्ठा चरा ज्येष्ठातोऽश्लेषा एकोनविंशी, मघा विंशी, चित्रा चतुर्विंशी, अनुराधा सप्तविंशी, श्रुतिः पञ्चमी, पौष्ण सप्तम वस्यतस्त्वदिनेऽश्विनीत एकोनविंश१ विंश२ चतुर्विंश३ सप्तविंश४ पञ्चम५ सप्तमीपु६ मूल१ पूर्वाषाढा२ शतभिषग् ३ रेवती४ मृगशिरो५ मघासु६ पातः स्यात् । एवमन्यत्रापि भाव्यं । पातेऽभिजिन्न गण्यते ॥

अत्र गुरुपार्श्वमाम्नायमाह—

पातं शूलस्य गंडस्य व्यतीपातयो ।
साध्यवैधृतयोश्चान्ते धिष्ण्यं यत्तत्र वर्जयेत् ॥८३॥

व्याख्या—एकाया एते षड् योगा येषु भेषु समाप्यन्ते तेषु तस्मिन् पतति पाताः स्मात् स्यु—

वज्र १ व्याघात२ मैव काल ३ शिवर ४ एव च ।
मन्युदस्य सपक्ष६ चनि पाता नामसदृशका: " ॥१॥

यतः सैषा मरणविज्ञयप्रयायाम् ॥

॥ इति योगद्वारम् ॥ ४

इति श्रीमति आरंभसिद्धिवार्तिके तिथि १ वार २ भ ३ योग ४

पञ्चांशात्मकः प्रथमो विमर्शः ॥ १

श्रीसूरीश्वरसोमसुन्दरगुरोर्शिष्येण श्रीसकलगुणधरगुरौ दीप्यन्ते सम्प्रति ।
तच्छिष्याणाम्रमारंभसिद्धिवार्तिकं सद्गुरुरीत्या विमर्शो वेदः ॥ १ ॥

उद्यद्गोपवतीगदं नृमिथुनं नौस्थाग्निसस्यान्विता,
कन्या ना च तुलाधरो धृतधनुर्धन्व्यश्वपश्चार्धकः ।
एणास्यो मकरः कुटांकितशिराः कुम्भो विलोमाननः,
मीनो मीनयुगं च नामसदृशा प्रोक्ताः परे राशयः ॥ ८ ॥

व्याख्या—घोषवती वीणा वीणापाणिः स्त्री, गदापाणिर्नरः, ईदृक् समुदायनिविष्टं स्त्रीपुंसयुग्मं मिथुनराशिः। नौस्थाग्नीत्यादि वामे हस्तेऽग्निं दक्षिणे च धान्यं धरन्ती नौस्थिता कन्या कन्याराशिः। ना चेति तुलाहस्तः पुमांस्तुलाराशिः। धृतधनुरिति कन्यभोदेहपश्चार्धमश्वस्येव चतुष्पदं इत्यर्थः, उपरितनं तु देहपूर्वार्धं नरस्येव, तद्धस्ते च धनुः, ईदृग्धनूराशिः। एणास्य इति मृगतुल्यमुखो मकरो मकरराशिः। शिरःस्थकुम्भो नरः कुम्भराशिः, "स्कन्धासक्तरिक्तघट" इति तु बृहज्जातके। विलोमेति अन्योऽन्यं पुच्छाभिमुखमुखौ यमचरौ मीनौ मीनराशिः, अत्र पश्चात्स्थशीर्षपृष्ठोदयित्वं। परे उक्तशेषाः पञ्च राशयो मेषवृषकर्कसिंहवृश्चिकाख्याः स्वस्वनामानुरूपरूपाः। विशेषस्तु सर्वेषां किल राशीनां चेष्टास्थानान्यपि स्वस्वनामानुरूपमिति सम्प्रदायः। तथा च सारङ्गः—

"मेषो वैम्यमुपैति गर्जति वृषो ग्रामाश्रमेष्विर्मन्मथः घटा कर्कटको चलिम वनपे कन्या च मायाविनी।
सर्वे रम्यतुलाधरको मक्तिवपा चापपः पतापयो मौदधय मकर परे पनुरता मीने च चीरा मतिः" ॥१॥

तथा मेषवृषौ दिवा आरण्यौ, मिथिः ग्राम्यौ। मिथुनो ग्राम्य। कर्कमीनौ जले। सिंहोऽरण्ये। वृश्चिक मवासी। धनुर्कुंभौ ग्राम्यौ। मकरस्याधोऽत्र आरण्योऽन्यो जलचर इत्यादि। प्रयोजनं चास्य हृतमष्टावौ चौरचेष्टास्थानाभिज्ञान। ऐषु च क्रमेणूक्तिकर्माण्येवं दैवज्ञवल्लभे—"राज्याभिषेकविरोधसाहसदुष्टकर्माणि धात्वाकरार्थं च मेषे लग्ने सिध्यति१। विवाहवेश्ममवेशकन्यावरणादिशुभ कर्म क्षेत्रारंभपशुकर्मणी च वृषे२। वृषोक्तं विद्याशिल्पमूषणादि च मिथुने३। सेवामोगौ यष्टुपुमकर्म पौष्टिकं वापीकूपादिजलकर्म च कर्के४। मेषोक्तं वाणिज्यनृपसेवादिपुंमिलनादि च सिंहे५। स्त्रीसौभाग्यभूषणाविक्र्यादिचरस्थिरं कन्यायां६। कृषिसेवायात्रादि कन्योक्तं च तुलायां७। ध्रुवकर्म नृपसेवाचौर्यविदारणोमादिकर्म च वृश्चिके८। यात्रापुरमवसत्कर्माणि धनुषि९। क्षेत्राश्रयम्बुयात्रा चरकर्म नीचक्रिया च मकरे१०। अम्बुयात्रानौसञ्चीकरणबीजोप्तिरंभमेवनादि नीचकर्म च कुंभे११। विद्याभ्यासकृषिशिल्पपण्यकर्मनौयात्राभिषेकादि महत्स्वकर्म च सर्वं मीने सिध्यति१२।"

पक्षाग्नुक्तानि संसिद्धिं यान्ति ध्रुवेष्वतादिषु।
क्रूराणि क्रूरयुक्तेषु शुभानि सद्युक्तेषु तु" ॥ १ ॥

राशिशीलमाह—

पूर्वादिदिक्षु मेषाद्या पतयः स्युः पुनः पुनः।
चरस्थिरद्विस्वभावाः क्रूराक्रूरा नरस्त्रियः ॥९॥

व्याख्या—पुनः पुनरिति प्रतिविक्षेपार्थं योगः। तत्रायमर्थः—मेषाद्यास्त्रयः क्रमात् पूर्वादिचतुर्दिशामीशाः। एवं सिंहाद्यास्त्रयो धनुराद्यास्त्रयो वाच्याः। प्रयोजनं चास्य वक्ष्यमाण "वाताभ्यदिग्मुखे क्रमे" इत्यादिकं हृतद्रव्यो चौरादेर्गमनदिग्ज्ञानादि च। चरस्थिरेति मेषश्चरः। वृषः स्थिरः। मिथुनो द्विस्वभावः। कथं? आद्यार्धं स्थिरं द्वितीयार्धं चरं, तस्मात् स्थिरचरयोर्गुण-

# ॥ द्वितीयो विमर्शः ॥ २

॥ अथ राशिद्वारम् ॥ ५

राशिरथ तत्र मेषोऽश्विनी च भरणी च कृत्तिकापादः ।
वृषभस्तु कृत्तिकांह्रित्रयान्विता रोहिणी समार्गार्धा ॥१॥
मिथुनो मृगार्धमार्द्रा पुनर्वसोश्चांह्रित्रय प्रथमे ।
कर्की च पुनर्वस्वो पाद पुष्यस्तथाऽश्लेषा ॥२॥
सिंहस्तु मघा पूर्वाफल्गुन्य पाद उत्तराणां च ।
कन्योत्तरात्रिपादी हस्तश्चित्रार्धमार्ध च ॥ ३ ॥
तौली चित्रान्त्यार्धं स्वाति पादत्रयं विशाखायाः ।
स्याद्वृश्चिको विशाखाचतुर्थपादोऽनुराधिका ज्येष्ठा ॥४॥
धन्वी मूलं पूर्वाषाढाऽपि च पाद उत्तराषाढः ।
स्यान्मकर उत्तराषाढांह्रित्रितयं श्रुतिर्धनिष्ठार्धम् ॥५॥
कुंभोऽन्त्यधनिष्ठार्धं शततारा पूर्वभाद्रपात्रिपदी ।
मीनो भाद्रपदांह्रिस्तयोत्तरा रेवती चेति ॥६॥

व्याख्या—एषां भावना—राशिचक्रेऽभिजित् पृथक् न गण्यते, ततः सप्तविंशतौ भेषु प्रत्येकं पादचतुष्कभावादष्टोत्तरं शतं नक्षत्रपादा वर्गीभवन्ति प्राक् सुविदितेषु नवभिर्नवभिः पादै रेकैको राशिरिति प्रथम राशयः स्युः अत एव पुरुषाविभागस्य राशिचक्रस्य नानानक्षत्रपादनियमितवर्णना-ज्ञात्वा समस्तवर्णाः कार्याः । अभिजितस्तु पादत्रयस्य वर्णा उत्तराषाढाया अन्त्यपादे तदनन्त-पादस्य वर्णः श्रवणस्याद्यपादे चान्त्यवर्णाभ्याः ॥

मेषादीनां वर्णानाह—

मेषाच्छोणार्जुनहरिद्रक्तश्वेतैतसमेषकाः ।
पिंगपिंगळकल्माषकह्वारमलिना रुचः ॥ ७ ॥

व्याख्या—मेषादिति मेषप्रभृति राशीनां वर्णाः विचारणीया तु वर्णाज्ञानमपीति शेषः । अर्जुनो धवलः । हरित् पीतनीलः शुकवर्णत्वात् । रक्तः कर्बुरः चित्रवर्णत्वात् । श्वेतः कृष्णः । पिंगः पिंगलश्च पीतरक्तः । कल्माषः कर्बुरः शुककपिलत्वान्मिश्रवर्णः कृष्णः । कह्वारः कपिल-वर्णः । मलिनो मत्स्यवर्णः । मयोक्तं चास्य विशिष्य मतांतरेषु तथैवं—भानुमूलमीनरूपं कृष्णं किञ्चि वर्णाज्ञानापये । उक्तं च—' अंशकस्याद्यावदे दृश्यं ' । ततश्च तस्य भानुमूलतेर्यस्तुनी द्वन्द्व-द्वारिप्रभेऽन्येन वर्णज्ञानं स्यात् ॥

स्वोच्चत सप्तमं नीच त्रिकोणान्यथ भानुत ।
सिंहो५ क्ष२ मेष१ प्रमदा६ धनु९ घट७ घटा ११ क्रमात् ॥१२॥

व्याख्या—यस्य यस्य यदुच्चं तस्मात्तत्सप्तमं तत्तस्य नीचं दिग्दहनाष्टाविंशतीत्यादिरुच्चस्थानेऽत्रापि योज्या। तदभावमर्थं तत्तन्नीचेऽपि वाच्य। तथाहि—मेषात्सप्तमे तुलायामाद्या दश त्रिंशांशा रवेर्नीचं, वृषात्सप्तमस्य वृश्चिकस्याद्यास्त्रयस्त्रिंशांशा इन्दोर्नीचं। अत्रापि संप्रदायस्त्वयम्—तुलायां रविर्नीचस्तत्रापि दशांशान् यावत परमनीचः पश्चात्तु नीच, एवं चन्द्रादिष्वपि वाच्यं। पाश्चात्यादिमन्थैः सह सवादी नाम सम्प्रदायः। जातकनारचन्द्राद्यभिप्रायस्त्वयम्—"तुलायामर्को नीचस्तत्रापि दशमे त्रिंशांश परमनीचः, एवं चन्द्रादिष्वपि वाच्य"। ताजिके तु नास्ति परमनीच संज्ञा, किंतु तुलायामाद्यदशांशान् यावदर्को नीच इत्युक्तं, एवं चन्द्रादिष्वपि वाच्यं। विशेषस्तु—

कन्यायां तुङ्गमप्योक्तं राहूर्वं मिथुनः स्मृतः।
राहुनीचं धनुर्वर्गादिकं तामिवरस्य च॥१॥

उच्चनीचस्थापना—

| उच्चानि नीचानि परमोच्चपरम नीचानि | रवि मेष तुला १ | चन्द्र वृष वृश्चिक ३ | मंगल मकर कर्क २८ | बुध कन्या मीन १५ | गुरु कर्क मकर ५ | शुक्र मीन कन्या २७ | शनि तुला मेष २ | राहु मिथुन धनु |
|---|---|---|---|---|---|---|---|---|

परमोच्चता परमनीचता च पठितत्रिंशांशप्रमाणस्य तत्तदंशस्य मध्यभागे, कोऽर्थः ? त्रिंशत्कलाभिः क्रमे स्यातामिति तत्त्वः। परमोच्चनीचत्वयोः समयज्ञानोपायमाह—

"मासं रविस्तुङ्गस्था १ सार्धं भौमश्चपमोदसार्धः ५।
त्रिसप्तमासोऽन्यत्र राहुश्चन्द्रा४ सपादविंशयुगम्"॥१॥

इदं तावद्ग्रहाणां राशिस्थितिमानं। तथा च—

त्रिंशांशे शार्कशुक्रात्यैः दिनं सार्धचतुर्वधि।
इन्दोः२ कुजेन सार्धदिनं मासमेकं शनैश्चरे६॥१॥
अष्टादशदिनी राहोश्चत्वारिंशिनी गुरो८"॥ इति

तत्र मेषसंक्रान्तौ नवदिनेभ्योऽनु दिनमेकं परमोच्चोऽर्कः१। वृषे सप्तदशीभ्योऽनु सार्धं घटी चतुर्थं चन्द्रः परमोच्च२। मकरे सार्धचत्वारिंशद्दिनेभ्योऽनु सार्धमेकं दिनं भौमः परमोच्चः३। कन्यायां चतुर्दशदिनेभ्योऽनु दिनमेकं बुधः परमोच्चः४। कर्के द्वापञ्चाशद्दिनेभ्योऽनु त्रयोदश दिनानि गुरुः परमोच्चः५। मीने षड्विंशतिदिनेभ्योऽनु दिनमेकं शुक्रः परमोच्चः६। तुलायामेकोनविंशतिमासेभ्योऽनु मासमेकं शनिः परमोच्चः७। परमनीचेऽप्येवमेव भावना। इदं च सामान्ये नोक्तं ग्रहस्यं। यतो भौमाद्याः प्रायो वक्रिता अतिचारिता वा स्युः। न च तदानीमयं परमोच्चनीचत्वसमयः संभवति; तेन वक्रातिचारवतां ग्रहाणां सद्यमानकत्वेन स्पष्टतां कृत्वा यथोक्तांशैरेव परमोच्चनीचत्वे निर्णेयं। राहुराशीनां तु सौम्यलोकसमयबुध्यस्येति। उच्चनीचप्रयोजनं त्वेवम्—

सुतभावे शिष्या अपि । स्त्रीति भार्या । अत्र गमागमावपि । अष्टमे रोगमपि । धर्मभावे क्रमागत विद्याऽनुष्ठितविद्याऽभिज्ञितवक्तृत्वमावपि । दशमे कर्मव्यापारः, अत्र पितामाष्यमातृपर्यायावपि च । लाभे नक्षत्रमत्यपि । व्यये सदसद्व्ययादि च विचार्याणि (यं) । द्वादशेति यथा लग्नादारभ्य द्वादश भावा उक्तास्तथा चन्द्रादपि ज्ञेयाः, लग्नचन्द्रयोर्मध्ये यस्तदानीं बलवान् स्यात्तस्माद्द्वादश भावा विचार्या इत्याम्नायः ॥

भावानां नामान्तराण्याह—

सुहृन्मन्दिरपातालहिबुकाम्बुसुखाभिधम् ।
चतुर्थमष्टमं छिद्रं चतुरस्रे उभे पुनः ॥१४॥

व्याख्या—सुहृन्मन्दिरेति मित्रभवनं गृहभवनं रसातलमित्यादिपर्याया अन्यत्र व्यवहर्तव्याः । एवमग्रेऽपि सर्वत्र पूर्वोक्तव्यादिद्वादशभावनामस्वपि च बोध्यं । चतुर्थमिति स्थानमिति शेषः । छिद्रमिति छिद्ररन्ध्रावपापपर्यायाः । अष्टमं मत्युस्थानमनायु सञ्ज्ञमपि ॥

त्रित्रिकोणं च नवमं त्रिकोणे नव पञ्चमे ।
सप्तमं कामजामित्रद्युनद्यूनास्तसंज्ञकम् ॥ १५ ॥

व्याख्या-कामेत्यादि कामो मदनः, जामित्रशब्दो विवाहपर्यायः जामिं भगिनीं त्रायति त्यजतीति कृत्वा । तथा सर्वोऽपि ग्रहो यस्मिन् राशावुदितस्तस्मात्सप्तमेऽदर्शनं याति ततोऽस्तसंज्ञा ॥

स्यातां तृतीये दुश्चिक्यविक्रमे पञ्चमे तु धी ।
मध्यमेपूरणव्योमान्याद्दुर्दशमधामनि ॥ १६ ॥

व्याख्या-इह किल तुर्यस्य पातालाम्बुसंज्ञे दशमस्य मध्यव्योमसंज्ञे च भूगोलकल्पनयेत्यूर्ध्व भूगोलमध्ये अर्कः प्रातः प्राच्यामुदीय प्रदक्षिण भ्रमन्मध्याह्ने दशमधामनि व्योममध्यभागस्य सायं सप्तमेऽस्तमेति, तथैव च रात्रावपि भ्रमन्मध्यरात्रे तुर्यधाम्नि पाताले भूत्वा पुनः प्रातः प्राच्यामुदे तीत्यादि । पाताले च स्वभावादम्बुस्थानमिति प्रतीतमेव ॥

उपान्त्यं११ सर्वतोभद्रमन्त्य१२ रिष्फमुदीरितम् ।
षवन्त्युपचयार्थीस्त्रिषड्दशैकादशान् पुनः ॥ १७ ॥

व्याख्या—उपान्त्यमेकादशं सर्वतोभद्रमिति तत्रस्थग्रहस्य सर्वथाऽपि शुभत्वात् । अन्त्यं द्वादशं रिष्फशब्दः पर्यायेणान्त्यः । उपचयेत्यादि लग्नाच्चन्द्राच्च त्रिषडादिस्थानान्युपचयसंज्ञानि, यत एषु स्थितः पापग्रहोऽपि शुभफलप्रदः स्यात्, शेषाणि त्वपचयाख्यानीत्यर्थादभ्यते । प्रयोजनं त्विद—

कार्यं चतुर्थं त्वष्टमिति सिद्धि वारे ग्रहे चोपचयोपगतेऽपि ।
शीतांशुकेन्द्रोपचयस्थिते च वारे शुभे चापि भवत्यवाप्यम् ॥ ११ ॥

केन्द्रचतुष्टयकण्टकनामानि वपुः१ सुखा४स्त७ दशमानि१० ।
स्युः पणफराणि परतः ५-८ ११ तेभ्योऽप्यापोक्लिमानीति३ ६ ९ १२॥१८॥

व्याख्या—षण्णामिति निर्धारणे षष्ठी । व्यादिष्विति अन्यतरेषु त्रिषु चतुष्पञ्चसु षट्सु वा स्ववर्गेषु यः स्थितः, न तु कदापि षट्सु समवति, सर्वेष्वप्येकांशस्य कुजादीनां होरायाश्चा-भावात्, स स्ववर्गस्थस्तत एव च मध्यः । पञ्चस्वेवेति यस्तु व्यादिषु परकीयेषु स्थितः सोऽन्य वर्गस्थस्तत एव विफलः । विशेषस्तु यत्र नवांशे षण्णां पञ्चानां चतुर्णां वा शुद्धानां वर्गाणां सौम्य एव ग्रहस्वामी लभ्यते स नवांशः षड्वर्गस्य पञ्चवर्गस्य चतुर्वर्गस्य वा सौम्यत्वात् प्रतिष्ठादि कर्मसु विशेषतो ग्राह्य । स चैवं निर्धारितः, तथाहि—

' सत्तमनवमा मेसे१ पंचमछट्ठा विसे२ मिहुणि छट्ठो३ ।
पढमसत्तमा य कक्के४ सिंहे छट्ठो५ कन्नी तइओ६ ॥ १ ॥
अट्ठमनवमा य तुले७ विच्छियमग्गे चउत्थ नवमो८ ।
धणुअंमि छट्ठसत्तमनवमा९ मयरम्मि पंचमओ१० ॥ २ ॥
छट्ठट्ठमा य कुंभे११ पढमो तइओ य मीणलग्गम्मि१२ ।
नवरंसवग्गछवग्गे एएसु सव्वसुद्धेसु सुहो " ॥ ३ ॥

अत्र नवांशवर्गादि एषु नवांशेषु चतुर्वर्गशुद्धिस्तावत्सर्वेषु पञ्चवर्गशुद्धिषड्वर्गशुद्धी तु केषु चिन्नवांशेषु सम्पूर्णेषु स्तः, कयाश्चित्तु किंयत्यपि भागे स्तः, तत्रापि विस्तरभयान्नास्माभिर्व्याख्याने लिखिताऽस्ति ततोऽभ्यूह्या । इह च केचित्त्रिवर्गशुद्धावप्यन्ये तु नवांशस्यैव प्रमुखत्वात्तमेवैकं सौम्य-सत्त्वमात्रात् षड्वर्गशुद्धिं विनाऽपि सम्मताश्रियन्ते, तदत्रैवं तत्त्व—लग्ने शुभग्रहनवांशशुद्धौ सत्यां यथा यथा शुभषड्वर्गाधिकता तथा तथा प्रतिष्ठादौ शुभकार्ये तद्विशिष्य मान्यम् ॥

राशिप्रसङ्गात्प्रश्निमोपक्रमग्रहाणां प्रमेयमाह—

ग्रहाः स्युरैन्द्र्याद्यधिपा दिनेशः१
शुक्रा२र३ राहु४रार्कि५ शशि६ ज्ञ७ जीवाः ८ ।
पापाः क्षीणेन्द्वर्कतमोऽसितारा
स्तैः संयुतो ज्ञश्च परे तु सौम्याः ॥ २५ ॥

व्याख्या-पूर्वादयष्टदिशां क्रमात्स्वामिनो ग्रहाः । स्थापना—

| ईशान गुरु | पूर्व रवि | अग्नि शुक्र |
|---|---|---|
| उत्तर बुध | | दक्षिण मंगल |
| चंद्र वायव्य | शनि पश्चिम | राहु नैर्ऋत्य |

अत्र प्रयोजनं तु केन्द्रस्थे बलिनि ग्रहे यौगदिग्गमनादिप्रस्थान । उक्तं च—' दिग्नाथा केन्द्रगैर्वा समये वा यतेद्दिशमर्कान् " इत्यादि । क्षीणश्चिरप्यादि कृष्णचतुर्दश्यादीदिनत्रयेऽल्पः क्षीणः शशी क्रूरः, तमा राहुः, असितः शनिः । तैः क्षीणेन्द्वाद्यन्यतरैः संयुत एकराशिस्थो बुधोऽपि क्रूरः । परे इति अन्ये पूर्णेन्दुरक्रूरयुतो बुधो गुरुशुक्रौ च । अस्य प्रयोजनं पापसौम्यग्रहबलविभुत्वा-व्यापकादेशानभ्यूह्येत्यादि । विशेषस्तु—

रक्तश्यामो भास्करः१ गौर इन्दुः२ नात्युच्चाङ्गो रक्तगौरश्च वक्रः३ ।
दूर्वाश्यामो ज्ञः४ गुरुर्गौरगात्रः५ श्यामः शुक्रः६ भास्करिः कृष्णदेहः ७ ॥१०"

| राशीनां गृहाणि | द्वादशांशेशाः | | | | | | | | | | | | त्रिंशांशेशाः | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ मेष | मं | शु | बु | चं | र | बु | शु | मं | गु | श | श | गु | ५ मं | ५ श | ८ गु | ७ बु | ५ शु |
| २ वृष | शु | बु | चं | र | बु | शु | मं | गु | श | श | गु | मं | ५ शु | ७ बु | गु | ५ श | ५ मं |
| ३ मिथुन | बु | चं | र | बु | शु | मं | गु | श | श | गु | मं | शु | ५ मं | ५ श | ८ गु | ७ बु | ५ शु |
| ४ कर्क | चं | र | बु | शु | मं | गु | श | श | गु | मं | शु | बु | ५ शु | ७ बु | ८ गु | ५ श | ५ मं |
| ५ सिंह | र | बु | शु | मं | गु | श | श | गु | मं | शु | बु | चं | ५ मं | ५ श | गु | ७ बु | ५ शु |
| ६ कन्या | बु | शु | मं | गु | श | श | गु | मं | शु | बु | चं | र | ५ शु | ७ बु | ८ गु | ५ श | ५ मं |
| ७ तुला | शु | मं | गु | श | श | गु | मं | शु | बु | चं | र | बु | ५ मं | ५ श | गु | ७ बु | ५ शु |
| ८ वृश्चिक | मं | गु | श | श | गु | मं | शु | बु | चं | र | बु | शु | ५ शु | ७ बु | ८ गु | ५ श | ५ मं |
| ९ धन | गु | श | श | गु | मं | शु | बु | चं | र | बु | शु | मं | ५ मं | ५ श | ८ गु | ७ बु | ५ शु |
| १० मकर | श | श | गु | मं | शु | बु | चं | र | बु | शु | मं | गु | ५ शु | ७ बु | ८ गु | ५ श | ५ मं |
| ११ कुंभ | श | गु | मं | शु | बु | चं | र | बु | शु | मं | गु | श | ५ मं | ५ श | ८ गु | ७ बु | ५ शु |
| १२ मीन | गु | मं | शु | बु | चं | र | बु | शु | मं | गु | श | श | ५ शु | ७ बु | ८ गु | ५ श | ५ मं |

अथ महाणां क्रमस्य च स्पष्टीकरणे तनुबलस्युपयोगि सर्वषड्वर्गाणां साधारणं विंशोपकमानमाह—

षड्वर्गेऽष्टादश१८००नव९००षट्६००द्वे२००सार्ध१५०शतानि पञ्चिंश५० ।
क्रमशो गृहहोरादौ विंशा स्युः प्रभुरिह नवांशः ॥ २३ ॥

व्याख्या—गृहाणां मेषादीनां सर्वेषां प्रत्येकं मानमष्टादशशती विंशाः होराणां नवशती गृहार्धरूपत्वात् द्रेष्काणानां षट्शती गृहत्रिभागरूपत्वादिति स्वयं साध्यं । विंशा तु पञ्चविंशतिकेति कथ्यते । विशेषस्तु—" चन्द्रमण्डले किल तिथ्यादिषष्टिभ्यः षड्गुणं, ततोऽपि क्रमे षड्गुणकं ततोऽपि होरायाः सर्वे यथोत्तरं पञ्चपञ्चगुणत्वम् " इति हरभट्टवचनात् । एतेषु नवांशस्यैव माहात्म्यमाह—प्रभुरित्यादि इहास्मिन् गृहादिषड्वर्गेऽभिरत्नमाला दृश्यमानत्वात्सर्वविधाधिकारादिसर्वकार्ये ष्वधिकारी नवांश एवेत्यर्थः । यतः—

' स्वार्थे मध्यफलं त्रिंशांशे त्रिविधफलं समादेश्यम् ।
होरायां चारफलं क्रमफलं सर्वांशके स्यादम् " ॥ १ ॥

तथा ग्रहो नवांशस्य प्राधान्यं ? तथाहि—

' क्रूरे शुभेऽपि नवांशः क्रूरः स्यादेव सिद्धिदः ।
क्रूरे क्रूरेऽपि सौम्यांशः शुभदाऽसौ बली यतः ॥१॥

इति दैवज्ञवल्लभे । तथा क्रूरांशस्थः सौम्यग्रहोऽपि क्रूरः स्यात् सौम्यांशस्थस्तु क्रूरोऽपि सौम्यः स्यात् इति क्रमः । तथा क्रूरांशस्थस्य सौम्यग्रहस्यापि दृष्टिरशुभा सौम्यांशस्थस्य च क्रूरस्यापि दृष्टिः शुभा । तथा महगोचरशुद्धिविचारावसरे ग्रहो राशिगोचरेणाशुभोऽपि नवांशगोचरेण यदि शुभः स्यात्तर्हि शुभ एवेत्यादि कल्प्यमिति ॥

अथ यथा ग्रहः स्ववर्गगोऽन्यवर्गगो वा स्यात्तथाऽऽह—

षण्णां ऽप्यादिषु वर्गेषु यो ग्रहः स्वेष्ववस्थितः ।
स स्ववर्गगतो ज्ञेय एवमेवान्यवर्गग ॥ २४ ॥

व्याख्या—समाहारस्मोत्क्रमेण सृष्टया कर्माणि प्रथम१ दशम२ सप्तम३ तुर्य४ भवनानि तैराख्या क्वर्य यासां ताः पूर्वाद्या दिशस्तासु। अथ भावः—कर्म प्राची तत्र बुधगुरू बलिनौ। दशमं दक्षिणा तत्र रविकुजौ। सप्तमं पश्चिमा तत्र शनि। तुर्यमुत्तरा तत्र शुक्रेन्दू च बलिन इति। मन्दराजस्थितव्यया१२ वा११ विपदद्वय... ...विदिक्चतुष्कं तु क्रमात् पूर्वा दिक्चतुर्दिक्समकमेण विदिशां दिगनुगामित्वात्। इद दिग्बलम्२ ॥

बलिनोऽह्नि गुरुसितार्का सदा बुधो निशि तु चन्द्रकुजमन्दा।
स्वदिनादिषु च सितासितपक्षद्वितयेषु शुभक्रूरा ॥ ३० ॥

व्याख्या—सदेति दिवा रात्रौ चेत्यर्थः। स्वदिनादिष्विति स्वदिनस्ववर्षस्वमासस्वकालहोरासु वत्सराधिपमहा बलिनः। ते चैव—

"यस्य वारस्य मध्ये स्याच्छुक्लप्रतिपदो मुखम्।
तन्मासेशः स विज्ञेयश्चैत्रे वर्षाधिपः पुनः" ॥ १ ॥

व्यवहारसारेऽप्युक्तम्—

"चैत्रादिमेषसंक्रान्तिशक्रसंक्रान्तिवासरा।
मतिवर्षं क्रमाज्ज्ञेया राजानो मन्त्रिसस्यपा " ॥ १ ॥

दिनेशस्तद्दिनवार एव। कालहोरेशास्तु मागुक्ताः। तदत्र "वर्षमासदुहोरशैर्दिः पञ्चोत्तरा फले" इति मुहूर्तसारे। अस्यार्थः—वर्षेशग्रहः किल समग्रं स्ववर्षे यावत्सार्द्धं, कोऽर्थः? पञ्च विंशोपान् फलं दत्ते। मासेशग्रहः समग्रस्वमासे दश विशोपान्। दिनेशस्तु स्वदिनाभ्यपि पञ्चदश विंशोपान्। होरेशस्तु स्वहोरायां स्ववारयोगात् पूर्ण विंशतिविंशोप फलं ददातीति। सितासितेति शुक्ले पक्षे सौम्या महा बलिनः, कृष्णे तु क्रूराः। इदं कालबलम्३ ॥

रविचन्द्रावुदगयने विपुलस्निग्धाश्च वक्रगाश्चान्ये।
बलिनो युधि चोत्तरगा ह्यर्केन्दुयुताश्च चेष्टाभिः ॥ ३१ ॥

व्याख्या—उदगयने उत्तरायणे मकरादिषट्के रविचन्द्रौ, न तु कर्कादिषट्के। विपुला बहुबिम्बो दिता विशालस्थूलबिम्बाश्च, न तु बाला वृद्धा अस्तमिता वा। तत्र बालत्वमुदयादनु स्यात्, वृद्धत्वं पुनरस्तमयादर्वाक्। 'बाल्ये वार्धके च सर्वे ग्रहाः सदाई निर्बला" इति सत्यर्षयः प्राहुः। स्निग्धा इति स्फुरत्किरणाः ये वक्ष्यमाणा इत्यर्थः, तथात्वं चार्कादूरतरत्वस्य सति स्यात्। वक्रगा इति वक्रत्वे किल सर्वग्रहाणां मूलत्रिकोणतुल्यं बलं इति पाकभिर्या। अन्ये इति भौमाद्याः पञ्च ग्रहाः रवीन्द्वोर्वक्रत्वाभावात्। इदंप्रकारं सूक्तं—' वक्री पापो वक्री शुभो स्निग्धा ' इति। भौमादिग्रहाणां गतयश्चैवम्—

'सूर्यमुक्ता उदीयन्ते शीघ्रा अर्के द्वितीयगे। समं तृतीयगे बाल्ये मन्दा मार्गौ चतुर्थगे ॥१॥
वक्राः पञ्चमषष्ठेऽर्के तेऽतिवक्रा नगा७ष्ट८गे। नवमे दशमे मार्गाः सरला काम११रिष्फ१२गे" ॥२॥

अत्र पञ्चमषष्ठे इति भाविबुधगुरुशनैश्चरेष्वोक्तं। बुधशुक्रौ त्वर्कस्यासन्नत्वादेव वक्रीत्वात्। एव मार्गेऽपि बाच्यं। इद ... । युधि चेति द्वे द्वयस्मिन्नरूपावे मिथस्ताराग्रहाणां

स्थानवशोक्तिसमये मित्रस्वगृहेत्यादुक्तमिरपतो ग्रहमैत्र्यमाह—

रवेः शुक्रशनी शत्रू ज्ञः सम सुहृदः परे ।
चन्द्रस्यार्कबुधौ मित्रे कुजगुर्वादय समा ॥३५॥

व्याख्या—समा मध्यस्था न रिपुर्न मित्रमुदासीन इत्यर्थ । परे चन्द्रकुजजीवा । चन्द्रस्येति उभयोर्मध्यस्थारिः ॥

कुजस्य ज्ञो रिपुर्मध्यौ शनिशुक्रौ परेऽन्यथा ।
बुधस्य मित्रे शुक्रार्कौ शत्रुरिन्दु समा परे ॥३६॥

व्याख्या—परेऽर्केन्दुजीवा मित्राणि । शत्रुरिन्दुरिति मत एवेन्दुगृहे ज्ञो मित्रमत्री ज्ञगृहे त्विन्दुः शत्रुमैत्रीति । परे भौमगुरुमन्दाः ॥

जीवस्यार्कोद्भयो मित्राण्यार्किर्मध्य परावरी ।
कवेरमित्रौ मित्रेन्दू मित्रे ज्ञार्की समावुभौ ॥३७॥

व्याख्या—अरी सूर्येन्दू । उभौ भौमगुरू ॥

मन्दस्य ज्ञसितौ मित्रे गुरुर्मध्यः परेऽरयः ।
तत्कालसुहृदो द्वि२ त्रि३ सुख४ लाभा११ न्त्य१२ कर्म१० गाः॥३८॥

व्याख्या—परेऽर्केन्दुभौमा । शत्रुमित्रमध्यस्थानां स्थापना यथा—

| ग्रहाणां शत्रु मित्राणि मध्यस्थाः | रवि | चन्द्र | मंगल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|---|
| शत्रु | शुक्र-शनि | | बुध | चन्द्र | बु-शु | र-चं | र-च-म |
| मित्राणि | चं-मं-गु | र-बु | र-चं-गु | र शु | र-चं-मं | बु-श | बु-शु |
| मध्यस्थाः | बु | मं-गु-शु-श | शु-श | मं-गु-श | श | मं-गु | गु |

तत्कालेऽस्यापि जन्मनि प्रश्नादिलग्ने वा यत्र स्थाने कस्मिंश्चिदेको ग्रहोऽस्ति तस्माद्द्वितीयादिस्थाने योऽन्यो ग्रहः स्यात्स तत्काले द्वित्र्यादिस्थानस्थितिकालावधीत्यर्थः तस्य मैत्री स्यात् । इयं तात्कालिकी मैत्रीत्युच्यते ॥

अस्याः फलमाह—

मित्रमध्यारयो येऽत्र निसर्गेणोदिता क्रमात् ।
अधिमित्रसुहृन्मध्यास्ते स्युस्तत्कालमैत्र्यत ॥ ३९ ॥

व्याख्या—अधिकं मित्रमधिमित्रं, अर्थादेव च मित्रस्थानस्थाऽन्यानि प्रथमपञ्चमषष्ठसप्तमाष्टमनवमस्थानानि तत्कालवैरस्थानानि । तदुक्तं चैव—

" येऽत्रारिमध्यमित्राणि निसर्गेणोदिताः क्रमात् ।
अधिसुहृन्मध्यास्ते स्युस्तत्कालवैरतः " ॥१॥

सुगमतायै तु ग्रहाणां मित्रशत्रुस्वरूपं चक्रद्वयेनबोध्यं, तथाहि—

इन्दोस्तनौ त्रिरिपुमन्मथखायगस्य १–३–६–७–१०–११,
धीधर्मरिष्फधनबन्धुमृतौ ५–९–१२–२–४–८ स्थितैश्च ॥४१॥
स्यान्मङ्गलस्य सहजद्विषदायगस्य ३–६–११,
सौरेस्तथा व्ययतप सुखगैश्च १२–९–४ वेधः।
चान्द्रेः स्वबन्धुरिपुमृत्युखलाभगस्य २ ४ ६-८ १० ११,
पुत्रत्रिधर्मतनुर्निर्व्ययधनान्त्यगैश्च ५ ३-९ १-८ १२ ॥४२॥

व्याख्या–निर्मलवत् छिद्रमष्टममित्यर्थः ॥

वाचस्पते स्वतनयास्तनवायगस्य २–५–७–९–११,
वैधस्तथान्त्यसुखविक्रमखाष्टगैश्च १२ ४ ३ १०-८ ।
शुक्रस्य षट्खमदनाम्बुयो १ २ ३ ४ ५ ८-९ ११ १२ ऽष्टसता
थाकाशधर्मतनयायतृतीयषष्ठे ८ ७-१ १० ९ ५ ११ ३ ६ ॥४३॥

व्याख्या–षट्कत्यादि पञ्चसप्तमसप्तमधर्मनवस्थामगुणः। ग्रहाणां वेधस्थापना यथा–

| गुरोः | | शुक्रस्य | | रवे | | चन्द्रस्य | | भौमशन्यो | | बुधस्य | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | १२ | १ | ८ | ३ | ९ | १ | ५ | ३ | १२ | २ | ५ |
| ५ | ४ | २ | ७ | ६ | १२ | ३ | ९ | ६ | ९ | ४ | ३ |
| ७ | ३ | ३ | १ | १० | ४ | ६ | १२ | ११ | ४ | ६ | ९ |
| ९ | १० | ४ | १० | ११ | ५ | ७ | २ | | | ८ | १ |
| ११ | ८ | ५ | ९ | | | १० | ४ | | | १० | ८ |
| | | ८ | ५ | | | ११ | ८ | | | ११ | १२ |
| | | ९ | ११ | | | | | | | | |
| | | ११ | ३ | | | | | | | | |
| | | १२ | ६ | | | | | | | | |

॥ इत्युक्तं समसर्जं राशिद्वारम् ॥ ५



## ॥ अथ गोचरद्वारम् ॥ ६

अथ स्याद्वादरत्नेऽत्र मातुपञ्चितं क्रममात च ग्रहगोचरद्वारमाह—

श्रेयान् गोचरतोऽशुभानुपचये ३ ६ १० ११
चन्द्रस्तु साधपुने १ ३ १० ११ १ ७,
मकार्की त्रिषडायगा ३ ६ ११अथ शुभ
स्त्वन्त्याम्बयुग्लाभग २ ४ ६ ८ १० ११ ।

' यादृशेन शशाङ्केन सङ्क्रान्तिर्जायते रवेः ।
तन्मासि तादृशं मासुः शुभाशुभफलं नृणाम् " ॥१॥

एतेनार्को द्वादशाष्टमाद्यशुभस्थानस्थोऽपि गोचरेण वाराचक्रेण शुभावस्थादिना च शुभे चन्द्र एव सति तत्तत्फलं शुभ ददाति रत्नमालायां । यथा–

" सितपक्षादौ चन्द्रे शुभे शुभः पक्षकोऽशुभे त्वशुभः ।
बहुले गोचरशुभदे न शुभः पक्षेऽशुभे तु शुभ " ॥१॥

इति वचः । अस्यार्थः–शुक्लपक्षस्य प्रतिपदि लग्नस्यां यदि चन्द्रः शुभस्तदा तस्मिन् पक्षेऽपि चन्द्र शुभ एव, यदि चाशुभस्तदा अशुभः । कृष्णपक्षस्य तु प्रतिपदि लग्नस्यां यदि चन्द्रः शुभ स्तदा तस्मिन् पक्षेऽपि चन्द्रोऽशुभ एव, यदि त्वशुभस्तदा चन्द्रस्तस्मिन् पक्षेऽपि शुभ एवेति । तथा– ' यादृशेन ग्रहेणेन्दोर्युति' स्तादृशो हि सः " इति दैवज्ञवल्लभे । तथा–

' अशुभोऽपि शुभश्चन्द्रः सौम्यमित्रगृहांशके ।
स्थितोऽथवाधिमित्रेण बलिष्ठेन विलोकितः " ॥१॥

इति दैवज्ञवल्लभे । अथ सर्वग्रहसाधारणमुच्यते–

" असत्फलोऽपि यः सौम्यैर्दृष्टो यः सत्फलोऽपि वा ।
क्रूरेण दृष्टोऽरिणा वा स न किञ्चित्फलप्रदः " ॥१॥

इति दैवज्ञवल्लभे । तथा–" नीचेऽस्तेऽरिगृहे वापि निष्फलो ग्रहगोचरः " । इति वस्तु ।

**चन्द्रो जन्मत्रिषट्सप्तदशैकादशगः शुभः ।**
**द्विपञ्चनवमोऽप्येवं शुक्लपक्षे बली यदि ॥४५॥**

व्याख्या–जन्मेति । विशेषस्तु–

" यात्रा१ युद्ध२ विवाहेषु३ जन्मेन्दौ रोगसंभवे४ ।
क्रमेण शुभकरा१ भङ्गो२ वैकल्यं३ मरणं४ भवेत् " ॥१॥

इति नारचन्द्रटिप्पण्यां । ननु चन्द्रगोचरस्य प्रागनुक्ते शुभत्वमिद, सत्य, परमिन्द्रोः माधा न्यतमत्वप्रदर्शनाय दोषः । प्राधान्य कथमिति चेत् उच्यते–यथा मनस उपयोगे सत्येव सर्वाण्यपीन्द्रियाणि स्वस्वविषयग्रहणक्षमाणि, नापरथा तथा चन्द्रे शुभे सत्येव शेषग्रहा' शुभं फलं ददति, नापरथा । ' चन्द्रे च शुभे सति सर्वग्रहाः शुभफलदा एव प्रायो न त्वशुभफलदा " इति व्यवहारप्रकाशे । हर्षप्रकाशेऽप्युक्तं–" चन्द्रस्यैव बलात्सर्वमासन्न ग्रहा शुभाति सुदृढमुद्दं " इति । द्विपञ्चे त्यादिविशेषविधानाद्योगान्नात्र पुनरुक्तदोषः । एवमिति शुभ इत्यर्थः । शुक्लपक्षे इति प्रवर्धमान इति भावः, न तु कृष्णपक्ष, क्षीयमाणत्वात् । बली भवतीति अनेन शुक्लपक्षेऽपि कृशः सन् चन्द्रो द्विपञ्चनवमो न ग्राह्यः । कृष्णपक्षे च पुष्टोऽपि सन् द्विपञ्चनवमो न ग्राह्य इत्युक्तं तदय भावः–यादृशं द्विपञ्चनवमो गुरुः सदा शुभं दत्ते तादृशं वर्धमानतनुः शुक्लपक्षे पुष्टश्चन्द्रोऽपि द्विपञ्चनवमः शुभं दत्त इति रत्नमालायां ॥

बली यदि स्यात्तदादिग्रहोचयमाह–

"जन्मसंपद्विपत्क्षेमसंज्ञा प्रत्यरा साधका मृतिः ।
मैत्री परममैत्री च स्युर्द्वितीयादिमा इमाः ॥१॥

प्रत्यरायाः यमेति नामान्तरं । तारणां स्थापना यथा—

| जन्म१ | संपत्२ | विपत्३ | क्षेमा४ | यमा५ | साधका६ | निधना७ | मैत्री८ | परममैत्री९ |
|---|---|---|---|---|---|---|---|---|
| कर्म१० | संपत्११ | विपत्१२ | क्षेमा१३ | यमा१४ | साधका१५ | निधना१६ | मैत्री१७ | परममैत्री१८ |
| आधान१९ | संपत्२० | विपत्२१ | क्षेमा२२ | यमा२३ | साधका२४ | निधना२५ | मैत्री२६ | परममैत्री२७ |

आसु त्रिनवसु चतुर्थ्यः३ पञ्चम्यो३ नवम्यश्च३ तिस्रस्तिस्रस्तारा' श्रेष्ठाः । यदुक्तं—
"ऋक्षं न्यूनं तिथिर्न्यूना क्षपानाथोऽपि चाष्टमः ।
तत्सर्वं शमयेत्तारा षट्चतुर्थनवाश्रिता " ॥ १ ॥

आद्या३ द्वितीया३ अष्टम्यश्च३ तिस्रस्तिस्रो मध्यमाः । तृतीया'३ पञ्चम्यः३ सप्तम्यश्च३
तिस्रस्तिस्रोऽधमा इति सूक्तमेव ॥

विशिष्य चाह—

जन्माधानान्वितास्तिस्रस्तास्त्यजेत्क्षौरयात्रयो ।
शुक्लेऽप्यासु स्थिते रोगे दीर्घक्लेशोऽथवा मृतिः ॥४८॥

व्याख्या—तिस्रस्ता इति अत्र प्रत्येकं त्रितयसङ्ख्यायामपीति वक्तुं शुक्ले परं ताराया प्राधान्या
भावादिति द्रष्टव्यम् । यात्रयोरिति यदुक्तं —

'यात्रायुद्धविवाहेषु जन्मतारा न शोभना । शुभाऽप्यशुभकार्येषु प्रवेशे च विशेषतः ॥१॥
जन्मर्क्षसंज्ञाधानं कर्मसु शस्तेषु शस्तमेव स्यात् । यच्च न जन्मनि कार्यं विवर्जनीयं तदाधाने"॥२॥

शुक्लेऽपीति यद्यपि शुक्लपक्षे चन्द्र एव बली, न च तदानीं तारायाः प्राधान्यं, यदुक्तं—
'शुक्ले पक्षे बली चन्द्रस्ताराबलमकारणम् ।
पत्यौ स्वस्थे गृहस्थे च न स्त्री स्वातन्त्र्यमर्हति" ॥१॥

चन्द्रबलं च तदानीं वर्तते तथापीत्यपरार्थः, आस्विति जन्माधानाभिधसप्तमतारासु । दीर्घक्ले-
शोऽथवेति महान्तरप्रतिकृत्याभावे दीर्घक्लेशः तत्सद्भावे तु मृत्युरित्यर्थः । यदुक्तम्—
"यद्यपि सा शुक्ली चन्द्रस्तारा तथाप्यनिष्टा । जन्माधाने तृतीया च पञ्चमी सप्तमी तथा ॥१॥
तथासु तु तारासु व्याधि साध्या मूर्ता भवति चात । व्याधिवर्धनवशोद्भव्याः सर्वाऽस्मास्व तारासु" ॥२॥

अथ यात्रादिषु चन्द्रः शुभावस्थो विलोक्यते इति रत्नमालाभाष्ये वक्ष्यमाणचन्द्रावस्था
आह—

चन्द्रावस्था प्रोषित१ हत२ मृत३ जय४ हास५ हर्ष६ रति७ निद्रा ८ ।
भुक्ति९ जरा१० भय११ सुखिता१२ रात्यशा द्वादश यथार्थाः ॥४९॥

व्याख्या—यदा यावद्घटीमानमग्रस्येन्दुराशिभोगः स्यात्तदा तावान् टिप्पनकं विलोक्य
निर्णेयः । यथा सामान्येन पञ्चत्रिंशदधिकशत१३५ मितस्येन्दो राशिभोगस्य द्वादशभिर्भागे एका-
दश घट्यः पञ्चदश पलानि च स्युः । तत्समये च पञ्चत्रिंशदधिकशतमध्ये यावन्तो घट्यो भुक्ताः

पातालोपचयान्त्येषु ४ ३ ६ १० ११ १२
लग्नाच्च तरणि शुभः ॥ ५३ ॥
॥ इति रव्यष्टकवर्गः ॥ १
चन्द्रभोपचये३ ६ १० ११ लग्ना-
द्भानोः साष्टस्मरे स्थित ३-६ १० ११-८-७।
स्वास्मादिसप्तमे३ ६ १० ११ १ ७स्मारा
स्सद्व्यनवमात्मजे१ ६ १० ११ २ ९ ५ ॥ ५४ ॥
छिद्रत्रिलाभात्मजकेन्द्रगो ८ ३ ११ ५ १ ४ ७ १० बुधा
द्गुरोस्तु रिप्फाष्टमलाभकेन्द्रग १२ ८ ११ १ ४-७ १० ।
शुक्राच्चिपञ्चास्तनवायखाम्बुग ३ ५-७ ९ ११ १० ४,
शुभ शने पट्त्रिसुतायगः६-३-५-११ शशी ॥ ५५ ॥
॥ इति चन्द्राष्टकवर्गः ॥ २
कुज इन्दोरुपचयमे३-६-१०-११
सार्ये३ ६ १० ११ १लग्नात्सपञ्चमे ३-६-१०-११-५ सूर्यात् ।
व्ययायाष्टकेन्द्रगः२ ११ ८ १ ४ ७ १०स्वा
त्सौम्यात्त्रिसुतारिलाभस्थ ३ ५-६-११ ॥ ५६ ॥
जीवारखान्त्यायारिपु१०-१२-११-६
शुक्राच्छिद्रान्त्यलाभशत्रुगत ८-१२-११-६ ।
मन्दाच्चामनवाष्टम
केन्द्रस्थ ११ ९ ८ १ ४-७-१० शोभनो भौम ॥ ५७ ॥
॥ इति भौमाष्टक ॥ ३
बुधोऽर्कतोऽन्त्यायनवारिधीषु१२-११-९-६-५,
स्थित सतः सत्रिदशादिमेषु १२ ११ ९-६ ५ ३ १०-१ ।
त्रिपड्दशायाष्टसुखेषु० ३ १०-११-८ ४ चन्द्रा-
त्स्मासु तेष्वाद्ययुतेषु२ ६ १० ११-८ ४ १शस्तः ॥५८॥
कुजशनितो व्यन्त्यारिपु१ २ ३-४-५-७-८-९-१०-११
जीवादरिनिधनलाभरिप्फस्थः ६-८-११-१२ ।

शुक्रावापुत्राद्यम

नवमायस्थो१-२ ३ ४ ५ ८ ९ ११ बुध शुभदः ॥ ५९ ॥

व्याख्या—व्यस्तेति द्वादशसप्तमवर्जसर्वस्थानेषु । मापुत्रेति मापात्पुत्रं पञ्चमं यावत् पञ्च स्थानानीत्यर्थः ॥

॥ इति बुधाद्यवर्गः ॥ ४

गुरुः केन्द्रस्वरन्ध्रायें १–४–७–१०–२–८–११

व्वारास्त्वास्तत्रिपूत्तमः१–४–७–१०–२–८–११–३ ।

अर्कास्तत्रिनवस्वि१ ४ ७ १०-२-८ ११ ३ ९ न्वोः

स्वधीकामनवायग २ ५-७-९ ११ ॥ ६० ॥

स्वाविखायसुखधीसपोऽरिषु२–१–१०–११–४–५–९–६,

ज्ञाद्गुरु स्मरयुतेषु२ १ १० ११ ४ ५ ९ ६-७ लभत ।

स्वत्रिकोणरिपुखायग २ ९ ५ ६ १०-११ सितात् ,

व्यन्त्यधीरिपुषु ३–१२–५–६ मन्दतः शुभः ॥६१॥

॥ इति गुर्वष्टवर्गः ॥ ५

शुक्रो लमावासुत

धर्मायाष्टसु१-२-३-४ ५ ९ ११-८मतःस्वतःसाम्बः१ २ ३ ४ ५ ९ ११ ८ १०।

शशिनः सान्त्यः१ २ ३ ४ ५ ९ ११-८ १२ क्षनित

रवायसपस्विसुखधीमृतिषु १०–११–९–३–४–५–८ ॥६२॥

व्याख्या—स्पष्टैव भाव्या ॥

आमव्ययाष्टगोऽर्का११ १२ ८ द्

बुधात्त्रिकोणायषट्त्रिगः ९–५–११–६–३ शुभद ।

व्यापोविलमासिषु५–३–६–९–१२–१' कुजा

द्गुरोस्त्रिकोणाष्टखायगः ९–५–८–१०–११ शुक्रः ॥६३॥

व्याख्या—आपात्त्रिस्थानि तृतीयषड्नवमद्वादशानि । शाद्विलोमभवनम् ॥

॥ इति शुक्राष्टवर्गः ॥६

शनि स्वाव्यायपुत्रारि ३–११–५–६

व्शरास्तव्ययकर्मसु ३–११–५ ६–१२–१० ।

केन्द्राधायार्थगः१–४–७–१०–८–११–२ सूर्या–

अत्र षट्पञ्चाशदिति रव्यादिसप्तकस्य प्रत्येकमष्टाष्टरेखासंभवे षट्पञ्चाशत् एव तासां भेदान्म इति भावः । विशेषस्तु—"चतूरेखं सम्यक्त्वं" इति यदप्युक्तं, तथापि यस्य ग्रहस्याष्टकवर्गशुद्धि स्थानानि विलोक्यमानान्यस्ति तस्य शुद्धिपङ्क्तेर्ग्रहस्य स्वतः समुत्था रेखा यदि संपद्यते तदा चतूरेखमपि श्रेष्ठं, तदभावे पञ्चषादिरेखमप्यतस्तु तस्मिन्नग्रहस्य स्वतः समुत्था रेखा यदि संपद्यते तदापि चतूरेखं प्रशस्तं । तस्या अप्यभावे स एव शुद्धिपङ्क्तिर्ग्रहो यदि बलाधिक्येन शुभः स्यात्तदाऽपि चतूरेखं शुभम् । प्रकारत्रयस्याप्यभावे त्वधिकरेखोऽपि ग्रहो न शुभ इति व्यवहारप्रकाशे । तथा षट्पञ्चाशदिति रेखासर्वयोगं यदुक्तं तद्राहोः सर्वथा रेखा न सन्तीति मतेन । केचित्तु राहोरपि रेखा आहुः । तथाहि—

"स्वित्राग्निद्विनिगः१ ४ ७-१०-८ २ १ सूर्याद्राहू रेखामदः स्मृतः ।
इन्दोस्तनुत्रिधीरम्याद् धर्मकर्मव्यये१ ३ ५ ७ ८ ९ ११ १२ स्थितः ॥१॥
भौमात्तनुत्रिधीरिप्फे१ ३-५-१२ स्वाम्बुरम्यशान्तिमे २ ४-७-८ ११ बुधात् ।
जीवास्तप्रचमे२ ४ ७-८ १२ १ शुक्रादरिमूनायरिप्फगः ६ ७-११ १२ ॥२॥
शनेस्त्रिधीयमूलने३ ५ ७-११ क्रमाद्राहुस्तु शोभनः ।
त्रिपञ्चसप्तमनवमान्त्येषु१-५-७-९-१२ रेखाऽन्य न स्वतः ॥ ३ ॥
त्रिपञ्चारिंशद्रेखं स्यू रेखा राहुवर्गगाः । "

अथ कस्मिन् कार्ये को ग्रहः सफलोऽन्वेष्य इत्याह—

सर्वत्रेन्दुः कुजः सख्ये बोधे ज्ञः स्थापने गुरुः ।
याने शुक्रः शनिर्भौक्ष्ये मली भानुर्नृपेक्षणे ॥६६॥

व्याख्या—सर्वकार्येषु कर्मकर्तृचन्द्रो गोचरादिबली विलोक्यत इति शेषः । यदुक्तं—

"पग१ चउर२ मड३ सोक्ख४ वरीसा५ सहि६ सपगुण७ कमाई ।
तिहि५ रिक्ख२ वार३ करण४ जोगे५ तारा६ ससंकबलं७ " ॥१॥

अत एवोक्तं—

"गर्भरजप्प्रयोगिनि शुभेषिते शशिनि वर्धमाने च ।
तारायोगेऽप्यौढे सर्वेऽर्थाः सिद्धिमुपयान्ति " ॥ १ ॥

तत्र चार्थे विभागः—

मासे नृपतिविशेषाणां संग्रामव्यवहारयोः ।
चतुर्षु नामभे योज्यं शेषं जन्मनि योजयेत् ॥१॥ "

इदं नरपतिजयचर्यायां । लल्लादिकमतेऽपि च सर्वकार्येषु चन्द्रबलं नियमेन प्रकटयेत् । वस्तावादिः—

"कर्म देहः प्रभवोऽर्जकानि, मानवमन्त्रौ बाह्यः सेचरेन्द्राः ।
मासे गते देहवासमहनायो फलेनात्मचन्द्रवीर्यं प्रकल्प्यम् " ॥१॥

सख्यं युद्धं । बोधो विद्या । स्थापनं पदमतिष्ठाविवाहादि । यानं प्रस्थानं । भौक्ष्यं दीक्षा । नृपक्षण इति यो यस्य स्वामी स तस्य नृपः तस्य दर्शने । अयं भावः—यद्येतानि कार्याणि कुर्य

स्थान क्रियन्ते तदैषां महाणामशुद्धिदत्वेन वा समस्थत्वेन वा क्रमाधिकृत्यपञ्चर्गोचिपत्वेन वा केन्द्रोपच यस्थत्वेन वा षड्भादिविभागादिकरणत्वेन वा सर्वकर्म शुभ कार्यं, कार्यकर्तृभेदेषां गोचरफलं मान्यं। यदा तु तत्पूर्वमात्रसमक्रियन्ते तदैषां गोचरफल मासद्योपादि च मौनम् ॥

अथ राशावागत को महः कदा फलद इत्याह—

ज्ञोऽखिले फलदो राशावाद्यावादित्यमगलौ ।
मध्ये सुरासुराचार्यौ प्रान्ते स्विन्दुशनैश्चरौ ॥६७॥

व्याख्या फलद इति शुभगोचरस्थः शुभ फल दत्, अशुभगोचरस्त्वशुभमिति भावः। राशाविति पत्येन स्वयमाक्रान्ताऽस्ति तस्मिन्। आद्याविति आद्यद्रेष्काणे। मध्ये इति द्वितीयद्रेष्काणे। प्रान्ते इति तृतीयद्रेष्काणे। इदं च सहजगतौ वर्तमानानां महाणामुक्तं। यदा तु वक्रेणातिचारेण वा महा राश्यन्तरं गताः स्युस्तदैवम्—

" पक्ष१ दशाहं२ मासं३ च दशाहं४ मासपञ्चकम्५ ।
वक्रेऽतिचारे भौमाद्या पूर्वराशिफलप्रदा ॥ १ ॥"

इति छतः। अत्र पूर्वराशीति वक्रे सत्यग्रेतनराशेः अतिचारितास्तु पाश्चात्यराशेः फलं ददतीत्यर्थः। प्रश्नप्रकाशकारस्त्वाह—

"वक्रेऽतिचारे भौमाद्याः पूर्वराशिफलप्रदाः ।
मीनः शनिश्च यत्रस्थौ तस्य राशेः फलप्रदौ ॥ १ ॥"

विशेषस्तु—

"राश्यन्तगतः खेटः परभावफलं ददाति पूर्व्यमसु ।
मनयमरी यावदसावासीनफलं विवाहादौ ॥ १ ॥"

अत्र राश्यन्तोऽन्त्यत्रिंशांशरूपः ॥

विरुद्धे ग्रहगोचरे पुंसा विशिष्य सत्कर्मानिरतेन भाव्यं, सुवर्णमात्राद्यदानविकारवर्षा साहसादि च त्याज्यं, तथापि नैव न निर्वहतीत्यतस्तच्छान्तिकमाह—

अर्कारयो१र्ज्ञस्य२ गुरो३ सितेन्द्वो४र्मन्दस्य५ राहूरगयो६श्च सुदृष्ट्यै ।
सदा वहेद्विद्रुम१ हेम२ मुक्ता३ रूप्याणि४ लोहं५ च विराटज६ च ॥६८॥

व्याख्या—विद्रुमादीनां षण्णां पूर्वोक्तस्थैरर्कारयोरित्यादिपदैर्यथासंख्य योगः। उरगः केतुः। विराटजो राजावर्तमणिः। ननु सप्तानां महाणां सर्वदा विचार्य गोचरफलमुक्त, दिनमासवर्षादौ विपर्ययमप्येषामेव, तत्कथं राहुकेत्वोर्ग्रहत्वं, कथं वा तयोः मतिकूलगोचरत्वं, यच्छान्त्यर्थं विराटजादिधारणं क्रियते ? उच्यते—तयोर्दिनाधिपत्वाद्यभावाऽस्तु ग्रहत्वं त्वस्त्येव, राश्यादिचारस्याप्य वाऽनुपपत्तः। राहुगोचरस्य ग्रहवदिह विचारः इत्युक्तं, ततस्तदा तत्प्रतिकूलत्वे तच्छान्तिरप्युपपन्न। केतुरपि यथाद्रित' स्यात्तदा तदुक्तादिदिग्ज्ञान्तये तच्छान्तिकरणप्रयोगः ॥

तथा—

पूर्वादितोपाय च पद्मराग१ मुक्ता२ प्रवालानि३ सगारुडानि४ ।
सपुष्परागं५ कुलिशं६ च नील७ गोमेद८ वैडूर्य९ मणीन् वदेत ॥६९॥

व्याख्या—स्पष्टा ॥

ग्रहक्रमेण स्नानान्याह—

एलाशिलापद्मकपद्मपुशीरसुराह्वकश्मीरजशोणपुष्पैः ।
अर्के विधौ कैरवपत्रगन्धैः, सशंखशुक्तिस्फटिकैर्भवाने ॥ ७० ॥

व्याख्या—शिला मनःशिला । कश्मीरजमिमपुरुषो केसरं । शोणेति रक्तकनवीरपुष्पैरिति । स्नानादिविधेन त्रिसप्तविषमग्रहत्वेन सह योजनीयमिदं । भावप्रावे—पदादि भवमध्ये माञ्जिष्य मंत्रपूर्वं स्नानं कर्मे रविवारे । एवमग्रेऽपि तत्तद्ग्रहस्य वारोऽनुक्तोऽप्यूह्यः । पञ्चगव्यं चैवं मयानारोक्तम्—

"कृष्णाया गोमयं मूत्रं नीलाया कपिलाघृतम् ।
सुरभेर्दधि शुभ्रायास्ताम्राया: क्षीरमाहरेत् " ॥१॥

भौमार्थ शर्त महवारि ॥

भौमे बलाहिंगुलविल्वकेसरैर्मांस्या फलिन्याऽरुणपुष्पचन्दनैः ।
सुवर्णमुक्तामधुगोमयाक्षतैः, सरोचनामूलफलैर्बुधे पुनः ॥७१॥

व्याख्या—बलेति बलचान्यं । बिल्वेति बिल्वफलं । केसरो बकुलुः । मांसी मुरमांसिनाम्नी । फलिनी प्रियंगु । अरुणपुष्पं जपाकुसुमं । चन्दनं रक्तचन्दनं । मूलफलैरिति नारंगस्येति वसिष्ठः ॥

जीवे सजातिकुसुमैः सितसर्षपयष्टिमल्लिकापत्रैः ।
मूलफलकुंकुमैलामनःशिलाभिस्तु दैत्यगुरौ ॥ ७२ ॥

व्याख्या—मल्लिकेति विचकिलपत्रैः । मूलफलेति बीजपूर्वा इति वसिष्ठः ॥

कृष्णतिलाञ्जनलाजैः शतपुष्पीरोध्रमुस्तकबलाभिः ।
तरणितनये च गोचरविरुद्धराशिस्थिते स्नायात् ॥७३॥

व्याख्या—अञ्जनं सौवीराञ्जनं । लाजा व्रीहिधाना । शतपुष्पीति सोमा नाम ।

भालचन्द्रिकायामप्याह—

"रोध्रगर्भतिलपनकमुस्तामदहरिद्रानदगनाभिस्नानैः ।
स्नानमेतदपरोधति राहोः, सामभूतमिदमेव च केतोः" ॥१॥

पीतामिति शेषः

"मधिपंगुरजनीमुरमांसीकुष्ठकाञ्चसितसर्षपचन्द्रैः ।
वारिभि सह बने सह पैभ्रे, स्नानमति निखिलग्रहपीडाम्" ॥१॥

स्नान च नृपादीनामिवाचित । मन्त्रो यनम्तु—

"रवं१ सर्प२ रवं३ मांसं४ पीयं५ सिमं६ तिनु भ किन्ं ७।
पूम बर्लि च कुत्वा सुराह्मं विरुद्धाम" ॥ १ ॥

इति इपमफासे ॥

॥ इति गोचरद्वारम् ॥ ६

॥ इति श्रीमति आरंभसिद्धिवार्तिके राशि१ गोचर २ परीक्षात्मको द्वितीयो विमर्शः संपूर्णः ॥ २

श्रीसुरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणीगच्छेन्द्र मसुररत्नशेखरगुरुर्व्येद्दीप्यते साम्प्रतम् ।
तच्छिष्याभयदेवहंसरचितस्यारंभसिद्धेः सुधीश्रृङ्गारामिधवार्तिकस्य किल द्व्यंकस्यो विमर्शोऽभवत् ॥ १ ॥



## ॥ तृतीयो विमर्शः ॥ ३



### ॥ अथ कार्यद्वारम् ॥ ७

अथ कार्यद्वारमाह—

**कार्यं सितारेन्दुबलेऽपि पुष्ये, दीक्षां विवाहं च विना विदध्यात् ।**
**पुष्यः परेषां हि बलं हिनस्ति, बलं तु पुष्यस्य न हन्युरन्ये ॥१॥**

व्याख्या—कार्यं प्रस्तावात्सौम्यं । सितारेन्दुबलेऽपीति गोचरेणाष्टकवर्गेण वा विरुद्धे चन्द्र जन्मप्रत्यग्वधनैधनादितारासु चेत्यर्थः । सितारेन्दुबले तु सिद्ध्यतीति भावः । अपिशब्दात् पुष्य पञ्चरेखे सप्तरेखे वा चन्द्रे दुष्टग्रहेण विद्धो यदि स्यात् पापग्रहेणाक्रान्तो वा भुक्तो वा भोग्यो वा पश्चिमायां दृष्टिपथस्थो वा गमनेऽन्यदा परिघदण्डपातेन दग्धतिथिपरीतो वा तथापि पुष्ये चन्द्रयुक्ते सति पुष्यस्यास्तसमये पुष्यसत्के मुहूर्ते वा मतिज्ञमात्राशौचजन्मप्राशनोपनयनविद्यारम्भयात्रास्थापरि धानादि सर्वं शुभकार्यं कुर्यादिति रत्नमालाभाष्ये । दीक्षां च विवाहं च विनेति तपश्चरणस्वात्म-व्यापारत्यागपि पुष्ये न कार्यं । पुरा किल प्रजापतिः पुष्यनक्षत्रे प्रेयसीमुदूढवान्, नक्षत्रानुभावात् तीव्र कामार्त्या पीडितस्तां संभोक्तुमशक्नुवन् " मा: पापाव परे विवाहकार्येष्वनधिकारी भूया " इति पुष्यं शप्तवान् इति श्रुतिः । वर्के च विवाहवृन्दावने— ' पुष्यः स्म पुष्यत्यतिकाममेव प्रजापतः शाप स शापमस्मात् " । कामपोषकत्वादेव दीक्षायामप्यनधिकारी पुष्य इत्युक्तम् । परेषामिति कुटि विद्धाष्टकभोगादीनां । अन्ये इति ताराविन्यासयः । ते किल यथा पुष्यस्य बलं न हन्युस्तथा मह वेधविरुद्धतारत्वादिरूपं पुष्यस्य दोषमपि न हन्युः । पुष्यस्तु स्वबलेन तद्दोषं हन्तीति भावः । अत एवाहुः—

' सिंहो यथा सर्वचतुष्पदानां तथैव पुष्यो बलवानुडूनाम् " ॥

अथ कार्यभेदाय नक्षत्राणां भेदमाह—

**अधोमुखानि पूर्वाः स्युर्मूलाश्लेषामघास्तथा ।**
**भरणीकृत्तिकाराधाः सिद्ध्यै खातादिकर्मणाम् ॥२॥**

व्याख्या—खनिवापीकूपतडागपरिखादिखननिधानोद्धारप्रवेशपूतिविवरप्रवेशधातुकर्मनृपति-सहगणितविद्यारम्भादीनि ॥

**तिर्यङ्मुखानि सावित्रं मैत्रं ज्येष्ठा करत्रयम् ।**
**अश्विनीचान्द्रपौष्णानि कृषियात्रादिसिद्धये ॥३॥**

व्याख्या—गजोष्ट्रगमनवाणिज्यविषयगमनयात्रासिन्धुनृपसन्धिगमनवाहनयानीकर्मोष्ट्रकटरथकर्मप्रचारादीनि ॥

**ऊर्ध्वास्यान्युत्तरा पुष्यो रोहिणी श्रवणत्रयम् ।**
**आर्द्रा च स्युर्ध्वजच्छत्राभिषेकतरुकर्मसु ॥४॥**

व्याख्या—कर्मसु इति चतुर्थ्यर्थनात् दुर्गमाकारयोरभ्योत्कृष्टायमाविपिपह्यामिषेकादिष्वपि ॥
सामान्येन कार्यमुक्त्वाऽत्र स्नानाने नामपप्राशनपूर्वमुपयोगिनः क्रियतोऽपि कार्यविशेषानाह—

ऋत्वाद्यषुचतुष्टयवर्जी विषमासु रात्रिषु न योषाम् ।
सेवेत पुत्रकाम पौष्णमघामूलभेष्वपि च ॥ ५ ॥

व्याख्या—वर्जीति । उक्तं च विवाहविलासे—

"निशा षोडश नारीणामृतु स्यात्तासु चादिमाः ।
तिस्रः सर्वैरपि त्याज्याः प्रोक्ता तुर्यापि केनचित् ॥ १ ॥"

यत —

"चतुर्थ्यां जायते पुत्रः स्वल्पायुर्गुणवर्जितः ।
विद्याचारपरिभ्रष्टो दरिद्रः क्लेशभाजनम् ॥ २ ॥"

विषमास्विति । यतः—

"समासु निशि पुत्रः स्याद्विषमासु च पुत्रिका ।"

न योषामिति निषेधमुखेनाकिर्वचनगुप्तिसस्थापनार्थं । एवममेऽपि निषेधमुक्तौ विचार्यं ।
पौष्णेति, उक्तं च—

"गर्भाधाने मघा वर्ज्या रेवत्यपि यतोऽन्ययोः ।
पुत्रजन्मदिने मूलाश्लेषे स्तस्ते च दुःखदे ॥ १ ॥"

अत्र मूलाश्लेषे स्त इति "आधानान्नवमे जन्मति" वचनात् ।

"रत्नानीव मघास्वपि जाताः स्युः सूनवः शुभाः ।
अतो मूलमपि त्याज्यं गर्भाधाने शुभार्थिभिः ॥ २ ॥"

सीमन्तः स्यान्नृवारेषु मासि षष्ठेऽष्टमेऽपि वा ।
हस्तमूलमृगादित्यपुष्यश्रुतिषु योषिताम् ॥ ६ ॥

व्याख्या—नृवारा रविकुजजीवाः । हस्तेत्यादि त्रिविक्रमेण तु पुंसवनेऽपीत्युक्तं, तत्राप्येता-
न्येव भानि सगृहीतानि, एषामेव पुंस्त्वात्, इतराणां तु स्त्रीत्वात् । विशेषस्तु—

"मघाभिषातकाभाष पितृचन्द्रबले सदा ।
स्त्रीणां सीमन्त उद्वाहे मासमन्यत्र तत्पतेः ॥ १ ॥"

इति व्यवहारप्रकाशे ॥

विषकौमारजन्म स्याद्द्वितीयाशनिसार्पभे ।
सप्तम्यारशतर्क्षेश्च द्वादश्यर्काभिभेस्तथा ॥ ७ ॥

व्याख्या—एभिर्वारतिथिवारमयोगैर्जातं विषापत्यं स्यात् ।

"विषकन्यात्मजा मर्त्यं पित्रोः कुलक्षयकरी ।
हन्ति पश्चात् पतिं धर्मं श्वशुरं देवरं तथा ॥ १ ॥"

विशेषस्तु—सोमिमिति इत्य सर्वं कार्यं शुभं स्यात्, आवमपरं तु प्रायो न जीवतीति
व्यवहारप्रकाशे ॥

मूलपादफलमाह—

मूलस्यांह्रिचतुष्के पितृ१ मातृ२ द्रव्यनाश३ सौख्यानि४।

बालस्य जन्मनि स्युः क्रमतः सार्पस्य तूत्क्रमतः ॥८॥

व्याख्या—सौख्यानीति, नृपाद्यस्तु मूलतुर्यपादफलमेवमाह—

"क्षेत्राधिपसंदृष्टे शशिनि नृपस्तत्सुहृद्भिरर्थपतिः।

द्रेष्काणांशकपैर्वा भावः सौम्यैः शुभं याम्यैः" ॥१॥

इदं वालकस्य जन्मफले विचार्यं। अत्र क्षेत्राधिपेति यदा मूले चन्द्रे यद्राशिस्थित वराशीशो वर्तेत् यस्मिन् पश्यति तदा मूलतुर्यपादजो नृपः स्यात्, तद्राशीशस्य सुहृदः पश्येयुस्तदाऽर्थपतिः स्यात् चन्द्रस्थस्य द्रेष्काणस्य नवांशस्य वा स्वामी यदि सौम्यश्चेत् पश्येत्तदा शुभं क्रूरेण त्वशुभमिति।

बालस्येति, केऽप्याहुः—

"मूलस्यांह्रिचतुष्के क्रमेण पशुमातिनी१ कुलकरी२ च।

पितृपक्षमथ क्षयकृति३ मातृकपक्षं च४ जाता स्त्री ॥ १ ॥

मूले बालोऽप्यमः स्याता स्त्री तु पुण्यवती भवेत्।

ज्येष्ठा यथा विपरीताऽश्लेषा तदुभयेऽप्यथा ॥ २ ॥

तृतीया दशमी कृष्णा शनिभौमवारसंयुता।

शुक्लचतुर्दशीमूलभ्यायः संहरते कुलम्" ॥३॥

सार्पस्य तूत्क्रमत इति। तदुक्तम्—

"सार्पाद्ये प्रथमे राजा द्वितीयांशे धनक्षयः।

तृतीये जननीं हन्ति चतुर्थे पितृघातकः" ॥१॥

मूलपुरुषमाह—

मूर्ध्नि५स्य५ स्कन्ध८ बाहु८ कर२ हृदय८ कटी१ गुह्य१० जानु६ क्रमेषु६,

स्युर्घट्यः पञ्च पञ्चोरगकराटिकराष्टद्विदिक्तर्कतर्काः।

बालश्छत्री१ पितृघ्नो२ ऽसलदृढबलवान्३ राक्षसो४ ब्रह्मघाती५,

राजा६ मानी७ स्वसौख्यपाखद्द८ इह चपलो९ भ्रमर१० आशु जातः ॥९॥

व्याख्या—स्कन्धेति द्वयोः स्कन्धयोः प्रत्येकं चतस्रश्चतस्र इति घट्यष्टके वैशिष्ट्यं स्यात्, एवं करजानुपादेष्वपि। अन्यत्रापि यथायोगमूह्यं। असलदृढबलाभिधर्मार्थं। व्याप्तु मूलादिष्वपस्व [illegible]। मूलपुरुषस्थापना—

| | | | | | |
|---|---|---|---|---|---|
| मस्तके | ५ | राजा | हृदये | ८ | राजवरः |
| मुखे | ५ | पितृहन्ता | कट्यां | १ | अल्पायु |
| स्कन्धयोः | ८ | बलिष्ठः | गुह्ये | १ | सुखी |
| बाह्वोः | | [illegible] | जान्वोः | ६ | चपलः |
| हस्तयोः | २ | भ्रमः | पादयोः | ६ | अल्पायुः |

अन्याह—

कुत इदमेवमिति चेदुच्यते–एषां मुहूर्तानां क्रूरस्वामिकत्वोक्तेः। तथाहि—

'राक्षसो१ यातुधानश्च२ सोमः३ शक्रः४ फणीश्वरः५ ।
पितृ६ मातृ७ यमा ८ कालो९ वैश्वदेवा१० महेश्वराः११ ॥ १ ॥
साध्यदेवाः१२ कुबेरश्च१३ शुक्रो१४ मेघो१५ दिवाकरः१६ ।
गन्धर्वो१७ यमदेवश्च१८ ब्रह्मविष्णुमहेश्वराः'१९ ॥ २ ॥
ईश्वरो२० विष्णु२१रिन्द्राणी२२ पवनो२३ मुनय२४स्तथा ।
'षण्मुखो२५ भृङ्गिरीटी२६ च गौरी२७ मातृ२८ सरस्वती२९ ॥ ३ ॥
प्रजापतिश्च१ मूलस्य त्रिंशन्मुहूर्तनायकाः' ।
विपरीताः पुनर्ज्ञेया अश्लेषाजातबालके ॥ ४ ॥

त्यजेन्न वीक्षेत समाष्टकं वा, बालं पिता मूलविकारशान्त्यै ।
शतौषधीमूलमृदम्बुरत्नैः, स्नायाच्च हुत्वा सशिशुप्रसूक ॥ १० ॥

व्याख्या–त्यजेदिति स्वगृहादिति शेषः। समा वर्षाणि। शतौषधीति मूलसत्कमृत्तिकासहक पुतरीर्थोदकपञ्चरत्नैः साहचर्यात् पञ्चगव्यदन्तिमदसर्वौषधकषायपञ्चकसर्वौषधियुतैः सौवर्णमूलनक्षत्रेण राक्षसरूपेण सह सवत्सकुम्भमध्यक्षिप्तैस्तच्छास्त्रोक्तविधिना हवनपूर्वं। सशिशुप्रसूः इति मूलजातशिशुना तज्जनन्या च सह स्नायात्। अश्लेषाजातेऽप्येवमेव, नवरं तत्र सौवर्णसर्परूपेण सहेति ज्ञेयं। एतच्च मूलाश्लेषाविधानं सविस्तरं गृहस्थधर्मसमुच्चयादिग्रन्थेभ्योऽवसेयमपि बहुसावद्यत्वान्न प्रदर्श्यते। बहुसावद्यारम्भपातकभीरुणा तु मूलाश्लेषाजाते बालके सति सर्वनक्षत्रमोक्षकमहोत्सव सम्यग्मानपारपीठस्य श्रीमदर्हतो बिम्बस्य च मूलनक्षत्रजातस्य श्रीसुविधिजिनस्याश्लेषोत्पन्नस्य विधिना शास्त्रोक्तेन समहोत्सवं स्नात्रं कार्यं। एवमपि सकलक्षुद्रोपद्रवोपशमस्य सर्वत्र साक्षाद्दर्शनात्। अत्र केऽप्याहुः—

'विष्टिमासिकयोगेषु दुर्भिक्षे अग्निपुष्करे ।
सङ्क्रान्तौ दुर्दिने चैव मूलाश्लेषाजबालके ॥ १ ॥
ग्रहणे चैव कर्तव्यं पौष्टिकं मूलसार्पयोः ।" इति ॥

जन्मादौ नक्षत्रभेदानाह—

कुलमान्याश्विनी पुष्यो मघा मूलोत्तरात्रयम् ।
द्विदैवत मृगचित्राकृत्तिकावासवानि च ॥ ११ ॥
उपकुल्यानि भरणी ब्राह्मं पूर्वात्रयं कर ।
ऐन्द्रमादित्यमश्लेषा वायव्यं पौष्णवैष्णवे ॥१२॥

व्याख्या—वैश्वं श्रवणम् ॥

पूर्वेषु जाता दातारः संग्रामे स्थायिनां जयः ।
अन्येषु त्वन्यसेवार्ता यायिनां च सदा जयः ॥१३॥

व्याख्या—स्थायिमानिति एषु भेषु यदि युद्धं स्यात्तदा स्वस्थानस्थ राज्ञो जयः स्यात्, यदि स्थाऽऽगतस्य तु राज्ञः पराजयः स्यात्। अन्येषूपकुल्येषु यात्रा सन्धिसेवकाः स्युः, युद्धे च यायिनो जयः, नागराणां पराजयः येन प्रथमं यात्रायाम् कृतः स यायी, येन पश्चात् स नागरः॥

कुलोपकुलमान्यार्द्राऽभिजिन्मैत्राणि वारुणम्।
फलन्त्येतानि पूर्वोक्तद्वयसाधारणं फलम् ॥१४॥

व्याख्या—साधारणमिति यात्रा यायिनोऽपि स्युरन्यसेवकाश्च, युद्धे च सन्धिः स्यात्। उक्तं च—' कुलोपकुलभे सन्धिरिति ' ॥

वाराणां कुल्यादित्वमाह—

गुर्वर्कार्कीन्दवः कुल्या उपकुल्यः कुजः सितः।
तमश्चाथ बुधो मिश्रस्तत्र नक्षत्रवत्फलम् ॥१५॥

व्याख्या—तमो राहुः। अत्र वारस्यामावेऽपि ग्रहस्य ग्रहणमाहुः। मिश्रः कुलोपकुलः। केचित् तिथिवारवेलाराशियोगेन कुल्यत्वमाहुः, यथाहि—

' सूर्योदये कुजस्याहि नन्दा वृश्चिकमेषयोः१।
कुलीरयुग्मकन्यानां भद्रायामे बुधाह्नि२ ॥१॥"

अत्र यामे इति प्रहरद्वयघटनसमये इत्यर्थः।

'चापसिंहघटानां च मध्याह्ने वाक्पती जया३।
शनिभृगुमयी रिक्ता त्रियामान्ते भृगोर्दिने४ ॥२॥"

त्रियामान्ते इति तृतीयप्रहरान्ते।

' सूर्यान्ते शनिवारे तु पूर्णा स्यान्मकरमीनयोः ५।
कुम्भजामित्रयो वारे वेलायां राशिषु क्रमात् ॥३॥"

एभिर्योगैर्यात्रा कुल्यास्तत्र एव चोत्तमाः स्युरित्याशयः॥

रविनरमाह—

मूर्धा३स्यां३ स२ भुजा२ करौ२ र५ उदरा१ थोभाग१ जानु२ क्रमेण
ष्वभित्रिद्वित्रिपमद्विपञ्चकुकुद्वकर्केषु भेष्वर्कभात्।
भूप १ स्वात्मशनो२ऽमलो३ऽधिकबल४श्चौरो५ धनी६ शीलवान्७,
जारः८ स्यात्पथिकश्च९ भिक्षु१०रपि चोरश्च क्रमाद्बालकः॥१६॥

व्याख्या—अर्कभादिति अर्कनक्षत्रं रविनरस्य मूर्ध्नि दत्त्वा क्रमाज्जातकस्य जन्मभं यावद्गण्यं रविनरस्थापना—

| मस्तके | ३ | राजा | हृदये | ५ | धनवान् |
|---|---|---|---|---|---|
| मुखे | ३ | मिष्टाशी | नाभौ | १ | सुशील |
| स्कन्धयो | २ | स्वस्थिर | गुह्ये | १ | परदाररतः |
| बाह्वो | २ | बलवान् | जान्वोः | २ | विदेशगमनः |
| हस्तयो | २ | चौर्यरतः | पादयोः | ६ | [illegible] |

वाहूरवे स्थानभ्रष्ट' स्यादित्यपि क्वचित् । विशेषस्तु—

"मर्त्य मूर्ध्नि मुखे स्कन्धे पार्श्वाविभुजहस्तयोः ।
उपसप्तविपर्योपि हृत्नाभ्योरष्टधिका ॥ १ ॥
गुह्ये चहिस्तथा चान्वोरष्ट पद् पादयाम्यथा ।
एविपके क्रमेणैवमायुर्वर्षं विचक्षणैः ॥ २ ॥"

जातकर्मोपाधिमित्याह—

स्याज्जातकर्म चरलघुमृदुध्रुवर्क्षेष्वमीषु नामापि ।
तत्राविरुद्धमुभयोर्योनी१ गण२ राशि३ तारका४ वर्ग ५ ॥१७॥

व्याख्या—जातकर्म षष्ठीजागरादि । चरादिषु एषु चन्द्रपुष्टेषु वा यथायुक्तसमये वा प्रथमं बलिष्ठेषु मुहूर्तेषु वा कार्यं । तस्मिन् प्रकारत्रयेऽपि पूर्वपूर्वस्याभाव उत्तरोत्तरः प्रकार आदरणीयो न त्वन्यथा । यदुक्तं व्यवहारप्रकाशे—' विष्णुानां मौहूर्तिकमुख्यानां शिवरश्मियोगाच्च अधिकतम यथोत्तरमिति " । यदि च तथैव दिनमं भवनेऽपि च तस्यैव क्रम क्रियत तदा शुभतर इत्यौनकः—

"नक्षत्रचरणानां लक्षमुक्तं द्विगुणित स्वगकमे " ।

इति । एवं सर्वकार्ये भेषु वाच्यं । अमीष्विति नामाप्येषु स्यात्यं । उभयोरिति प्रस्तावात् न्यासो गुरुशिष्ययोः स्वामिभृत्ययोर्मैत्र्यादिपूरणम् ॥

अश्वाद्यश्विन्यादीनां योनीराह—

उडूनां योन्योऽश्व१ द्विप२ पशु३ भुजङ्गा४ हि५ शुनको६
ऽस्व७जा८मार्जारा९ खुदय१०-११रूप१२महि१३व्याघ्र१४महिषाः१५ ।
तथा व्याघ्रो१६ऽणो१७ऽणा१८श्व१९कपि२०नकुलद्वन्द्व२१-२२कपयो२३,
हरि२४र्वाजी२५धन्तावलरिपु२६रज २७ कुञ्जर२८ इति ॥ १८ ॥

व्याख्या—योन्य इति यथादित्यानामिति एताश्च गुरुशिष्यदम्पत्यादियोगार्थं पूर्वाचार्यैः कल्पिता एव न तु पारमार्थिक्य इति सममाक्रमाम्ये । पशुरजः । ओतुर्मार्जारः । इयति यथापूर्वमुक्त्यु न्योन्यत्वा । एवमग्रेऽपि ॥

योनिवैरमाह—

श्वैणं हरीभमहिनाखु पशुप्लवङ्गं, गोव्याघ्रमश्वमहिषमोतुकमूषकं च ।
लोकास्तथाऽन्यदपि दम्पतिभर्तृभृत्ययोगेषु वैरमिह वर्ज्यमुदाहरन्ति ॥१९॥

व्याख्या—श्वा च एणश्चेति नित्यवैरस्वेत्यभेनाप्यवसत वैरे वाच्ये समाहारद्वन्द्व श्वैर्ण यस्मिं कस्य नामभस्य श्वा योनिरन्यस्य च मृगयोनिः तयो श्वैर्ण वैरमित्यर्थः । एवमहो मरवः । अन्यदपीति व्याघ्रैणं मयार्जारमित्यादि । भर्तृभृत्येत्युपलक्षणत्वाद्गुरुशिष्यादियोगेऽपि । विशेषस्तु—

"विहाय जन्मभं कर्मे नामभं न प्रमाणयेत् ।
जन्मभस्यापरिज्ञाने नामभस्य प्रमाणता ॥ १ ॥"

यथा—

"द्वयोर्जन्मभयोर्मैत्री द्वयोर्नामभयोस्तथा ।
जन्मनामभयोर्मैत्री न कर्तव्या कदाचन ॥ २ ॥"

अस्यार्थः—द्वयोर्जन्मभज्ञाने तयोरेव मेलमिष्यते । एकस्यापि जन्मभापरिज्ञाने तु द्वयोर्नाम भयोरेव विमर्शः, परमेकस्य जन्मभम् अन्यस्य च नामभं एव मेलो न विलोक्य । एवमेव गणरा श्यादिसर्वप्रकारेषु ज्ञेयम् । एतौ व्यवहारप्रकारौ ॥

सप्तविंशतिभानां गणानाह—

दिव्यो गणः किल पुनर्वसुपुष्यहस्तस्वात्यश्विनीश्रवणपौष्णमृगानुराधाः ।
स्यान्मानुषस्तु भरणीकमलासनर्क्षपूर्वोत्तरात्रितयशंकरदेवतानि ॥२०॥

व्याख्या—कमलासनर्क्षं रोहिणी पूर्वाणामुत्तराणां च त्रितयम् ॥

रक्षोगणः पितृभराक्षसवासवेन्द्रचित्राद्विदैववरुणाग्निभुजंगभानि ।
प्रीतिः स्वयोरतिनरामरयोस्तु मध्या वैरं पलादसुरयोर्मृतिरन्त्ययोस्तु ॥२१॥

व्याख्या—पितृभं मघा राक्षसं मूलं । स्वयोरिति आत्मीययोः । अतीति अधिकतमम् । समानगणयोरेक एव गणः स्यात् तदा मुख्या प्रीतिरित्यर्थः । अन्त्ययोर्नृरक्षसोः । उक्तं च—

"स्वकुले परमा प्रीतिर्मध्यमा देवमर्त्ययोः ।
देवराक्षसयोर्वैरं मरणं मर्त्यरक्षसोः ॥ १ ॥"

अभिजिद्विधावमरगणे इति कश्चित् । विशेषस्तु—मुख्यस्य वराये रक्षोगणा गौणस्य च कन्याये नृगणस्तदाप्युभयोः सद्राशिकूटत्वे१ तत्स्वामिमैत्र्ये२ योनिशुद्धौ३ न क्षीणचन्द्रयोः४ च सत्यां शुभयोग एव । तदुक्तं —

"रक्षोगणो यदा पुंसः कुमारी नृगणा भवेत् ।
सद्भकूट१ खगप्रीति२र्योनिशुद्धि३स्तदा शुभम् ॥ १ ॥"

अथ राशिकूटं राशीनां मिथो वैरमैत्र्यादि चाह—

राशेरोजान्मृतिः षष्ठे सर्वाः स्युः सपदोऽष्टमे ।
राशौ द्विद्वादशे नैःस्व्यं स्वामिमैत्र्ये पुनः प्रियः ॥२२॥

व्याख्या—यत्र द्वयो राशी मिथः षष्ठाष्टमौ स्यातां तयोः षडष्टमकाख्यं राशिकूटं, एवं द्विद्वादशनवपञ्चमादिष्वपि भाव्यं । मृतिरिति यत्रौजान्मेषमिथुनादितः सकाशात् षष्ठो राशिः स्यात्तस्मिन् षडष्टमके राशीनामनयोः मिथो वैरसद्भावात् । तत्र यस्याष्टमो राशिस्तस्य मृत्युः स्यादिति रत्नमालाभाष्ये । सपदः इति योजानेव सकाशादष्टमे राशौ सति तस्यापत्यश्रीविपद्षडष्टमक राशीनामनयोः मिथः प्रीतिसद्भावात् । तदुक्तं भावः—

'मकरवृषमीनकन्याश्चिककर्काष्टमे रिपुत्वं स्यात् ।
अजमिथुनसिंहधनुर्घटतुलाष्टमे मित्रताऽत्यन्तम् ॥ १ ॥"

ननु वैरमैत्र्यादिद्वयोर्जन्मभयोर्विचारविधुरिति, तस्यैव सर्वत्र व्यवहारात्, तर्हि जन्म राश्योरिहोक्तं ! उच्यते—

अत्रायेषु पञ्चसु राशीशद्वयोर्मिथो मैत्री, षष्ठे एकस्वामिकत्वं, सप्तमे त्वेकस्य माध्यस्थ्यमितरस्य मैत्री, तेनैतानि सप्त प्रीतिद्विद्वादशानि । शेषे त्वायचतुष्के स्वामिनोर्मिथो माध्यस्थ्यं, पञ्चमे त्वेकस्य माध्यस्थ्यमन्यस्य वैरं "द्विर्द्वादशयोर्वैरम्" इति मते मिथो वैरं वा, तेनैतानि पञ्च शत्रुद्विद्वादशानि । त्रिविक्रमोऽप्याह—'सिंहकर्कविषमराशितो द्वितीयस्थे सति यानि द्विद्वादशानि सुस्वाम्यशुभानि, यानि तु समात्सिंहाच्च द्वितीयस्थे सति सुस्वामि शुभान्येवेति' । केचिन्नाड्यादि-चतुष्कशुद्धत्वे सति मिथो माध्यस्थ्यमपि शुभमाहुः । यत्सारङ्गः—

"नाडी१योनि२र्गणा३स्तारा४चतुष्कं शुभदं यदि ।
औदास्येऽपि नाथानां भकूटं शुभदं मतम् ॥ १ ॥"

अत्रौदास्यमुदासीनता माध्यस्थ्यमिति यावत् । नाडीतारास्वरूपं अग्रे वक्ष्यते । सिंहद्वि-द्वादशं मुक्त्वा शेषाणि सर्वाणि द्विद्वादशान्यशुभानीति तु व्यवहारप्रकाशे ॥

## श्रेयो मैत्र्यात् परे त्वाहु कटिकृन्नवपञ्चमम् ।
## एकर्क्षे च भिन्नांशे श्रेय शेषेषु च द्वयोः ॥ २३ ॥

व्याख्या—कटिकृदिति नवपञ्चमं स्वभावात् कलहहेतुः । विवाहे त्वपत्यहानिकरमिति व्यवहारसारे । श्रेयो मैत्र्यादिति अन्ये त्वाहु—राशीशयोर्मिथो मैत्र्यां तु सत्यां श्रेष्ठमेव । यत्र त्वेकस्य मैत्री अन्यस्य तु माध्यस्थ्यं तन्मध्यमं । तत्स्थापना यथा—

| १ | ९ |
|---|---|
| मेष | सिंह |
| वृष | कन्या |
| मिथुन | तुला |
| सिंह | धनु |
| तुला | कुंभ |
| वृश्चिक | मीन |
| धनु | मेष |
| मकर | वृष |
| मित्राणि | नवपंचमानि |

| १ | ५ |
|---|---|
| कुंभ | मिथुन |
| मीन | कर्क |
| कर्क | वृश्चिक |
| कन्या | मकर |
| [illegible] | मध्यमानि |

विशेषस्तु—प्रीतिनवपञ्चमात् प्रीतिद्विद्वादशकमुत्तमं ततोऽपि प्रीतिषडष्टकं । यथा—

'मातृघ्नस्तु वरो मातुर्मातृघ्ना कन्यका पुनः ।
मृतैकमातापितरं संमार्ष्टि नवपञ्चकम् ॥ १ ॥"

अस्यार्थः—यदि कन्यायाः राशितो गणने वरस्य राशिरायभो वरराशितश्च गणने कन्याया राशिर्नवमः एवं सति नवपञ्चमादीनि सर्वाणि शुभानि । मृतैकेति वरकन्ययोर्मध्ये एकस्य मातापितरौ मृतौ तदा नवपञ्चमं शुभमेवेति मारचन्द्रटिप्पण्यां । एकर्क्षे चेति अत्रायमर्थोऽत्र राशिभेदे तदा द्वयोरपि यद्येक एव जन्मराशिस्तदा नवांशभेदे शुभमेव, द्वयोरप्येकं यदि जन्मभं तदा तु न शुभं । यत्त्रिविक्रमः—

'एकर्क्षे जायते यत्र विवाहे वरकन्ययोः ।
मृत्युर्वेषम्यं स मासो महादुःखफलप्रदः ॥ १ ॥"

अन्योऽप्याह—

'एकजन्मभजातानां परमा प्रीतिरुत्तमा ।
दम्पत्योस्तु मृतिः पुत्रा भ्रातरो वार्द्धमातरः ॥ १ ॥"

अपि च भरद्वाजो महर्षिरप्यस्ति, यमैकनक्षत्रेऽपि पादभेदाच्छुभमेव, एकपादत्वे तु न शुभं । यदुक्तम्—

"जन्मराशिस्थितो ग्रामस्त्रिषष्ठः सप्तमोऽपि वा । स्वकीयो द्रव्यनाशाय आपदा च पदे पदे ॥ १ ॥
चतुर्थोऽष्टमको ग्रामो द्वादशो यदि वा भवेत् । यत्रैवोत्पद्यते अर्थस्तत्रैवार्थो विलीयते ॥ २ ॥
पञ्चमो नवमो ग्रामो द्वितीयो यदि वा भवेत् । दशमैकादशश्चैव शुभद स फलप्रदः ॥ ३ ॥"

अथ तारासु वाच्यासु पूर्वं तत्संबद्ध नाडीवेधमाह—

चक्रे त्रिनाडिके धिष्ण्यमेकनाडिगतं शुभम् ।
गुरुशिष्यवयस्यादेर्न वधूवरयोः पुनः ॥ २४ ॥

व्याख्या—नाड्योऽत्र रेखारूपा ज्ञेयाः ततो ययोः जन्मभानि नामभानि वा एकनाडीगतानि स्युस्तेषां नाडीवेधोऽस्ति । भिन्नभिन्ननाडीगतत्वे तु स नास्तीति भावः । त्रिनाडिकचक्रस्थापना यथा—( समीपस्थपत्रे विलोक्या )

वयस्यादेरिति भ्रातृपितृप्रभुवयस्यादिसर्वद्वयेष्वपि समानैकनाडीभिः नाडीवेध शुभः । वधूवरयोरिति दम्पतियोगे तु नाडीवेधो न शुभः । उक्तं च हर्षप्रकाशे—

"सुमसुहि सेवयसिस्सा परपुरदेस सुह एगनाडीमा ।
कन्ना पुण परिणीआ हणइ पइ ससुरं सासुं च ॥ १ ॥"

विशेषस्तु—सुतसुहृदादीनां नाडीवेधसद्भावे विरुद्धयोनिकमयोगोऽपि न दुष्यति । दम्पत्यो नाडीवेधे तु फलमेवम्—

"द्व्यादिदिवसतो भर्तुर्मध्यनाडीव्यधे द्वयोः ।
पृष्ठनाडीव्यधे नार्या मृत्युः स्यान्नात्र संशयः ॥ १ ॥"

आयनमन्त्रसंगता या सा द्व्यादी ।

"समासन्ने व्यधे शीघ्रं दूरव्यधे चिरेण वा ।
वेधान्तरप्रमाणेऽत्र वर्षे दुःखं प्रजायते ॥ २ ॥"

अपि च यदि नाडीवेधस्त्यक्तुं न शक्यते तदाऽपि पादवेधस्त्याज्य एव । उक्तं च नरपति जयचर्यायाम्—

"एकचक्रे समासीनं भविन्यापादिपादिनः । वेधो द्वादशनाडीभि फलदः पतिकन्ययोः ॥ १ ॥
एवं निरन्तरो येषां दम्पतीनां भवेद्व्यधः । तेषां मृत्युर्न संदेह सान्तरस्त्वापदुच्यते ॥ २ ॥"

तथा तत्रैव ग्रन्थे दम्पतिवद्देवतामन्त्रयोर्गुरुशिष्ययोश्च नाडीवेधो शुभ इत्युक्तं । तथाहि—

"एकनाडीस्थिता यत्र गुरुर्मन्त्रश्च देवता ।
तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत् ॥ १ ॥"

सर्वेषां येषां मैत्रीप्रकाराणां नाडीवेधो बलिष्ठः । यदुक्तम्—

"सदा नाडिवेधस्यैकनाडीसमाख्यो, मङ्गलादिकान् सर्वमेतान् प्रशस्तान्" ॥

अथ तारामैत्रीमाह—

द्वयेषु गुरुशिष्यादेः प्रीतिहेतोः परस्परम् ।
त्रिपञ्चसप्तमीं तारां सर्वत्र परिवर्जयेत् ॥ २५ ॥

कृषिपाशुपाल्यादिकर इत्यादि । बहूनां लग्नस्थाने तु यो बलाधिकस्तस्य फलं वाच्यम् । एवमन्यत्राप्यूह्यम् ॥

लग्ने गुरौ त्रिकोणे सिते सितांशे विधौ च वेदज्ञः ।
भवति यमांशे गुरुसितलग्नेषु जडो विशीलश्च ॥४३॥

व्याख्या—सितांशे इति यत्र तत्र राशौ स्थितश्चन्द्रो यदि शुक्रस्यांशे स्यादित्यर्थः । एवम् मेऽपि । यमांश इति यमः शनिस्तस्यांशे इति चतुर्दशकालमपि स्युः । विशीलश्चेति च शब्दा मूकश्च ॥

त्रिषुगुरुबुधशुक्रे सार्केऽर्धनगुणहीनः कुजान्वितैः क्रूरः ।
सबुधैर्बुध सशौरैः स्यादुपनीतोऽलसो विगुणः ॥४४॥

व्याख्या—सार्कैरिति एषामर्कयुतौ सत्यामित्यर्थः । शौरिः शनिः । अयं श्लोको राज्याभिषेके कालेऽपि पाठ्यः ॥

चन्द्रे षष्ठाष्टमे मृत्युर्मूर्खत्वमथवा व्रतौ ।
व्रतमोक्षेऽथ केशान्ते चौले चैवंविधो विधिः ॥४५॥

व्याख्या—व्रतमोक्षो मौञ्जीबन्धच्छेदनादिरूपः । केशान्तो मुण्डनं । चौलं चूडाकर्म । यथा कुलाचारं प्रथमे तृतीये वा वर्षे यत्क्रियते । एवंविध इति योऽनन्तरमेव व्रतबन्धोक्तः ॥

वस्त्रे परिग्रहं प्राहुः कृत्तिकारोहिणीमृगैः ।
उत्तरात्रितयज्येष्ठापुष्यपौष्णाश्विदैवते ॥ ४६ ॥

व्याख्या—परिग्रहः स्थापनम् ॥

केन्द्रोपचयधीधर्मेष्वर्केन्दुज्ञसुरार्चितैः ।
शस्तैस्त्रिषड्दशायस्थैराधध्याज्जातवेदसम् ॥ ४७ ॥

व्याख्या—धीः [illegible] ॥

उदयेऽथ नवांशे वा राशीनां जलचारिणाम् ।
उदयस्थे च शीतांशौ वह्निरद्धाय शाम्यति ॥४८॥

व्याख्या—उदयो लग्नं । जलचारिणः कर्कमकरकुम्भमीनाः । ननु कुम्भस्य जलचरत्वं नास्ति, सत्यं, परमत्र जले चरतीति यौगिकव्युत्पत्तेर्विवक्षणात् कुम्भोऽपि संगृहीतः । अद्धाय शीघ्रम् ॥

क्रूराः कुर्युर्धने निःस्वमाढ्यं सन्तोऽखर्वं विधुः ।
इन्दुश्छिद्रे मृता सर्वे लग्ने च व्ययगो द्विजम् ॥४९॥

व्याख्या—अग्न्याधानलग्ने धनभवने यदि क्रूराः स्युस्तदा द्विजो निःस्वः स्यात्, सन्तः सौम्यास्तदा आढ्यः स्यात्, इन्दुर्धनगोऽखर्वः, छिद्रेऽष्टमे चेत्सर्वे ग्रहास्तदा मृत्युः । अत्राथ विशेषाश्चान्येऽपि ज्ञेयः—"अष्टमस्थे चन्द्रे द्विजपत्न्या मृत्युः, भौमे द्विजस्यैव, रविगुरुशनिषु तु

वह्निः प्रतिपत्तिसमवाप्तिप्रमाणो विधिविशेषो जैनर्षिप्रसिद्धः । आरम्भेऽन्यत्रापि चममयोस्तत्कार्यं पूर्वत् । विशेषस्तु—

"शान्तिकं पौष्टिकं कार्यं केन्द्रगगुरुशुक्रवासरे ।
कन्याविवाहनक्षत्रे पुष्याभिजिच्छ्रवणे तथा ॥१॥"

इति त्रिविक्रमः ॥

अथ मासा विप्रादीनां पञ्चदशस्लोकैराह—

मौञ्जीबन्धोऽष्टमे गर्भाज्जन्मतो वाऽब्दजन्मनाम् ।
राज्ञामेकादशे च स्याद्वत्सरे द्वादशे विशाम् ॥३७॥

व्याख्या—मौञ्जीबन्धो मेखलाबन्धः । अष्टमे इति यथाक्रममाचारं विप्राणां गर्भादष्टमे वर्षेऽपि जन्मजन्मानो विप्राः । विशो वैश्याः ॥

शाखाधिपे बलोपेते केन्द्रस्थेऽह्नि च तस्य वा ।
बले सूर्येन्दुजीवानां वर्णनाथे बलीयसि ॥३८॥
माघादौ पञ्चके मासां पौष्णाश्विन्योः करत्रये ।
श्रुतिद्वये मृगादित्यपुष्येषूपनयः श्रिये ॥३९॥ युग्मम् ॥

व्याख्या शाखाधिपो वेदाधिप एव यो जीवसितारेत्यनेन प्राणुक्तस्तस्मिन् बलिनाधिकमात्ये केन्द्रस्थे सत्युपनयः कार्यः । शाखाधिपे निर्बले सति कर्मसंकरसंभवात् । अह्नि वेति शाखाधिप तस्य वारे च । तत्र वेति वा शब्देनेदं सूच्यते—यदि कृष्णपक्षमुपनयः क्रियते तदा शाखासमदस्य वारे सम माघ । कृष्णपक्षविषयवर्षां च शाखेशो बलिष्ठः सन् केन्द्रस्थः कार्यः । यदि च त्रिंश शुद्धिमात्रेण क्रियते तथापि वारः शाखेशसमदस्यैव मान्य इति । वर्णनाथो वर्णानां जीवसितारविकुजेन्दुः । यथा सूर्येन्दुजीवानां सबलत्वे सर्वे वर्णनाथा सबला एवेति दैवज्ञवल्लभे । उपनय। यज्ञोपवीतप्रदानम् ॥

पराजितेऽरिवेश्मस्थे नीचस्थेऽस्तगते गुरौ ।
सितेऽपि चोपनीतः स्यात् श्रुतिस्मृतिबहिष्कृतः ॥४०॥

व्याख्या—य गुरौ जातानां यो दक्षिणगामी स पराजित इति यवादः । श्रुतयो वेदाः स्मृत धर्मशास्त्राणि ॥

क्रमादंशेषु सूर्यादेः क्रूरो१मन्दो२ऽतिपातकी३ ।
पटु४र्यज्वा५ च यज्वाढ्य६ च मूर्ख७श्चोपनयाद्भवेत् ॥४१॥

व्याख्या—सूर्यस्य नवांशे उपनीतः क्रूरः स्यात् चन्द्रनवांशे मन्द इत्यादि ॥

चतुष्टयेऽङ्कादिषु राजसेवी१, स्याद्वैश्यवृत्तिः२ क्रमतोऽन्त्यवृत्तिः३ ।
अध्यापकः४ कर्मसु षट्सु विज्ञः५, विद्यार्थयुक्तो६ऽन्त्यजसेवकश्च७ ॥४२॥

व्याख्या—चतुष्टय इति अर्के केन्द्रस्थे सत्युपनीतो राजसेवी स्यात् । चन्द्रे तु वैश्यवृत्तिः

सर्पदष्ट सुपर्णेन रक्षितोऽपि न जीवति ।
मूलार्द्राभरणीयुग्ममघाश्लेषाद्विदैवते ॥ ६३ ॥

व्याख्या—न जीवतीति शेषेषु जीवतीत्यर्थः । मूलेत्यादि, विवेकविलासे त्वेवम्—
"मूलाश्लेषामघा पूर्वात्रयं भरणिकाश्विनी ।
कृत्तिकार्द्रा विशाखा च रोहिणी दष्टमृत्युदाः ॥ १ ॥"
तथा—' तिथयः पञ्चमी षष्ठ्यष्टमी नवमिका तथा ।
चतुर्दश्यप्यमावास्याऽहिना दष्टस्य मृत्युदा' ॥ २ ॥
दष्टस्य मृतये वारा भानुभौमशनैश्चराः ।
प्रात: सन्ध्यास्तसन्ध्या च सङ्क्रान्तिसमयस्तथा ॥ ३ ॥" इत्यादि ॥

ज्ञातरोगस्य पूर्वार्द्रास्वातिज्येष्ठाहिभैर्मृतिः ।
भवेन्नीरोगता रेवत्यनुराधासु कष्टतः ॥ ६४ ॥
मासान्मृगोत्तराषाढे विंशत्यह्नां मघासु च ।
पक्षेण तु द्विदैवत्ये धनिष्ठाहस्तयोस्तथा ॥ ६५ ॥

व्याख्या—उत्तराषाढेति, अभिविज्ञातरोगस्य मासक्रमेण मृत्युरारोग्यं चेति शेषः ॥

भरणीवारुणश्रोत्रचित्रास्वेकादशाहतः ।
अश्विनीकृत्तिकारक्षोनक्षत्रेषु नवाहतः ॥ ६६ ॥
आदित्यपुष्यादिर्बुध्नरोहिण्यार्यमणेषु तु ।
सप्ताहादिह ताराया यदि स्यादनुकूलता ॥ ६७ ॥

व्याख्या—ताराया इति "शुक्लेऽप्यासुरिवते रोगे" इत्युक्तेः ॥
अत्र प्रसङ्गान्मृत्युज्ञानं लिख्यते—
'आइचाइ करे विसु मंगह पनरहमाहि ठवे विसु मंगह ।
बारह नाडिरितस्स य विअर, जीविममरण फुड आविम्मह ॥ १ ॥'
रम्याकान्त्यमभादौ दत्त्वा भुजङ्गस्थापना यथा—(अत्र समीपस्थे पत्रे स्थापनाद्रष्टव्या) भं २
अत्र ये ये यहा येषु येषु भेषु स्युस्ते ते तेषु तेषु भेषु देयाः, ततोऽर्कभाद्रोगिभावभ यावद्
गण्यते, यद्याद्यनाडीमध्ये प्रथमं१ नवमं९ त्रयोदशं१३ एकविंशं२१ पञ्चविंश२५ वा स्यात्तदा
मरणं । यदि द्वितीयनाडीमध्ये द्वितीय२ अष्टम८ चतुर्दशं१४ विंशं२० षड्विंशं२६ वा स्यात्तदा
बहुक्लेशः । यदि तु तृतीयनाडीमध्ये तृतीयं३ सप्तम७ पञ्चदश१५ एकोनविंशं१९ सप्तविंश२७
वा स्यात्तदाऽल्पक्लेशः । शेषनक्षत्रेषु आरोग्यं । शुभाशुभग्रहदेयाच्च विशिष्य शुभाशुभं वाच्यं ।
यतिदिनचर्यायां त्वेवमेव चक्रमार्द्रादौ दत्त्वा स्यात्प्रसूते—
' मार्द्रादि पञ्चदशभिर्वापि त्रीण्यन्तान्य त्यजन् ।
विनाडिचक्रे चन्द्रा१र्क२जन्म३वेधे न जीवति ॥ १ ॥'

'छायाकृतिः श्रिये स्याच्छत्रादिसमा गतापि रवा से ।
काकोलूकादिसमा न देवमागाभिवाऽपि पुनः ॥१॥"

सुवर्णं सर्व मर्वेन्यस्त निखातं दत्तमेव वा ।
मृदुश्रुतित्रयादित्यलघुत्त्रेषु शुभेऽहनि ॥५८॥

व्याख्या—न्यस्त स्थापनिकायां वाणिज्यव्यवसायादौ वा मुक्तं निखातं भूम्यादौ दत्त वा केनापिर्पितं, मृदुमध्यानामृक्षं यदपि वासवरेन समृद्धितं । शुभेऽहनीति शुभशनिवारेभ्यो । विशायस्तु-
"कलवानमथावासं क्षिमविष्णैर्विवीयत"।

यथा—"निमिषक्रियनवनिवर्धनमादित्याद्गवाणं करात् पौष्णात् ।
त्रितयं श्रवणत्रितयोत्तरासु मित्राधिदेवे च ॥ १ ॥"

नष्टं चतुर्भिरन्धाद्यैर्गच्छेत् पूर्वादिषु क्रमात् ।
लभ्यते सुखाद्१यत्नाद्२कष्टार्तेवः३ न साऽपि४ च ॥५९॥

व्याख्या—सुखादिति आशमस्थाने इति शेषः । अन्धेषु सर्वं लभते काणेषु सर्वमिति केचित् । द्विपादचतुष्पादेवन्येष्वपि दुःखेन लभ्यते, यानि तु त्रिपादत्वेन पादखञ्जानि तेषु सुखा यत्नेनापि लभ्यते इति लल्लः ॥

अन्धादिसमेवाह—

रेवत्यादिचतुष्केषु नामानि प्रतिभं जगु ।
अन्ध१ माकेकर२ चिह्न३ सुलोचन४ मिति क्रमात् ॥६०॥

व्याख्या—माकेकरं काणं । चिह्नं चिप्पटाक्षं । अत्र दिग्शुद्धिकृत् प्राह—
'रविरिक्खा छ च्चास बारस तरुणा य नव परे वेरा ।
सकमदि जाइ वेरीहिं न जाइ बाके कमइ पासे ॥ १ ॥"

न प्रेतकर्म कुर्वीत यमले सत्रिपुष्करे ।
क्रूरमिश्रध्रुवार्द्रासु तथा मूलानुराधयोः ॥ ६१ ॥

व्याख्या—मकर्णेष हतो गतो मतान्तर प्रेतस्तस्य कर्म शोककृत्यं । यमले इति, पक्षके तु तद्वर्जन प्रागप्यूचे । रविकुजवारी चात्र त्याज्याविति दिनशुद्धौ । अन्यत्र त्वेवम्—
पुष्याश्विनी स्वातिहस्ता ज्येष्ठा श्रवणरेवती ।
एषु प्रेतक्रिया कार्या रविवारं विना बुधैः ॥ १ ॥"

मृते सार्धे पञ्चदशमुहूर्त्तैर्नैव पुत्रकः ।
एकत्रिंशन्मुहूर्त्तैस्तु क्षेप्यः शेषैस्तु भेऽद्वयो ॥ ६२ ॥

व्याख्या—सार्धं पञ्चदशमुहूर्त्तत्वादि प्रागुक्तं । नैवेति आमिक्षिस्यपि न कार्यः पुत्रकः "अवड्ड कमिड न कायव्वो" इत्युक्तेः । क्षेप्य इति पुत्रकः कृत्वा मृतसमीपवर्ति त्याज्यः संस्कार समये मध्य एव क्षेप्यमेति रीतिः ॥

सर्पदष्ट सुपर्णेन रक्षितोऽपि न जीवति ।
मूलार्द्राभरणीयुग्ममघाश्लेषाद्विदैवते ॥ ६३ ॥

व्याख्या—न जीवतीति रोगेषु जीवतीत्यर्थः । मूलस्यादि, विवेकविलासे तोक्तम्—

"मूलाश्लेषामघा पूर्वात्रय मरणिकाश्विनी ।
कृत्तिकार्द्रा विशाखा च रोहिणी दष्टमृत्युदाः ॥ १ ॥"

तथा—' तिथय पञ्चमी षष्ठ्यष्टमी नवमिका तथा ।
चतुर्दश्यप्यमावास्याऽहिना दष्टस्य मृत्युदा' ॥ २ ॥
दष्टस्य मृतये वारा भानुभौमशनैश्चरा ।
प्रात सन्ध्यास्तसन्ध्या च सक्रान्तिसमयस्तथा ॥ ३ ॥" इत्यादि ॥

जातरोगस्य पूर्वार्द्रास्वातिज्येष्ठाहिभैर्मृति ।
भवेन्नीरोगता रेवत्यनुराधासु कष्टत ॥ ६४ ॥
मासान्मृगोत्तराषाढे विंशत्यहा मघासु च ।
पक्षेण तु द्विदैवत्ये धनिष्ठाहस्तयोस्तथा ॥ ६५ ॥

व्याख्या—उत्तराषाढेति, अभिजिज्जातरोगस्य मासद्वयेन मृत्युरारोग्यं चेति वृद्धाः ॥

भरणीवारुणश्रोत्रचित्रास्वेकादशाहतः ।
अश्विनीकृत्तिकारक्षोनक्षत्रेषु नवाहतः ॥ ६६ ॥
आदित्यपुष्याहिर्बुध्न्यरोहिण्यार्यमणेषु तु ।
सप्ताहादिह ताराया यदि स्यादनुकूलता ॥ ६७ ॥

व्याख्या—ताराया इति ' शुभकृत्याम्रूत्थिते राग' इत्युक्तेः ॥

अत्र प्रमाद्धाम्यग्मुदानं लिख्यते—

'माड्याइ चरे बिधु भंगइ पनरहमाहि ठवे बिधु भंगइ ।
बारह माहिरितम्स न दिस्सइ, जीविममरण फुड आखिज्जइ ॥ १ ॥'

अभ्याजान्तममादौ दत्वा शुभग्रहस्थापना यथा—(अत्र समीपस्थे पत्रे स्थापनाद्रष्टव्या) म च
अत्र च ये महा चपु वेषु भेषु स्पृशे त तपु वेषु भषु रेखाः, ततोऽर्कमात्रागिनामम यावन्न
च्छन, यद्यापन ईमध्ये प्रथमं१ नवमं९ त्रयोदशं१३ एकविंशं२१ पञ्चविंशं२५ वा स्यात्तदा
मरणं । यदि द्वितीयनाडीमध्ये द्वितीय२ अष्टमं८ चतुर्दश१४ विंशं२० षड्विंश२६ वा स्यात्तदा
कष्टम् । यदि तु तृतीयनाडीमध्ये तृतीयं३ सप्तम७ पञ्चदश१५ एकोनविंशं१९ सप्तविंश२७
वा स्यात्तदाल्पकष्टम् । शेषनक्षत्रेषु आरोग्यं । शुभाशुभग्रहयोगाच्च विशिष्य शुभाशुभं वाच्यं ।
यदिवादमे तथमेव चक्रमाद्यामाद्य दत्वा स्थाप्यमूच—

' माद्यापं' पञ्चदशभिर्माणि त्रीण्यन्त्यानि त्यजन् ।
विमादिचक्रे चन्द्रा१कः२जन्म३ष्वेव न जीवति ॥ १ ॥'

त्रिनाडिकचक्रस्थापना यथा—( समीपस्थपत्रे विलोक्या ) यं १

जन्मार्कमभ्येति, अयं भावः—'सूर्येणाधिष्ठिते रोगिणो जन्मनक्षत्रे चेत्स्यान्मृत्युः रोगारम्भे मरणम्" इति। त्रिनाडिचक्रे तु प्रवहत्रयाणां त्रिनाड्याद्यंशिचक्रस्थापनं कार्यं चेत्यूचे, तथाहि —

"नाई मड़ा मिगं अंते मज्झे मूलं च हिर्म।
रविरिक्ख जम्मरक्खं तिविड्डो न हु जीवई ॥ १ ॥"

एकत्रिंशत्त्रिनाडिकचक्रस्थापनेयम्—( समीपस्थपत्रे विलोक्या ) यं ४

तत्र—"रविरिक्खजम्मरक्खं एकनाडीगया जया।
तया दिने मरे मच्चू मणुआ जिणभासियं ॥ २ ॥"

अन्यत्रैवमप्याहुः—

'रोगिणो जन्मनक्षत्रस्य एकनाड्यां यदा रविः। मासद्वयं रवेर्मोक्षं यावत्कष्टतरं तथा ॥ १ ॥
रोगिणो जन्मनक्षत्रस्य एकनाड्यां यदा शशी। तदा पीडां विजानीयात्सप्ताहादधिकां ध्रुवम् ॥ २ ॥
क्रूरग्रहास्त्वन्ये तु यदि तत्रैव संस्थिताः। तदाऽकाले भवेन्मृत्युः सत्यमीशाननाषितम् ॥ ३ ॥"

एतैरन्यैश्च प्रकारैर्विमृश्य क्रूरग्रहसेन्दुभावितक्षस्य विध्यादिरोगोत्पत्तावपि मृत्युसम्भवो निर्देशः॥

भैषज्यमिष्टं मृगवारुणानुराधाधनिष्ठाश्रुतिरेवतीषु।
पुष्याश्विनीराक्षसहस्तचित्रापुनर्वसुस्वातिषु वेदपुष्ट्यै ॥ ६८ ॥

व्याख्या—भैषज्यं रसायनादि। वारविशेषेऽनुक्तेऽपि सर्वत्र सौम्यवारा मान्याः, इह सर्वोऽपि भेषजस्य वर्गोक्तः। एवं हल१गर्भकर्म२चतुर्विध३मातृक४वापी५कूप६राम७असकनाम-स्थापन८वेस्मकरण९इन्धन१० बीजोप्ति११नगरादिवोत्पोत्थूम१२ सुरपूजादि१३सर्वमंगल्य कर्मस्वपि विशेषतस्तुक्ते सौम्यवारा रविवाराश्च मान्या इत्युक्तम्॥

स्नानमुक्ताचनस्येष्टं वारयोर्न बुधशुक्रयोः।
ब्राह्मपौष्णोत्तराश्लेषादित्यस्वातिमघासु च ॥ ६९ ॥

व्याख्या—उक्तचनं नीरुजीकरणं। वारेषु सर्वेषु, भेषु ब्राह्मादीनि च व्यावानि। पू (पौ) ष्णोऽत्र बुधगुरू इत्येकस्मिन्नपि स्नात्वा वस्त्राः॥

अभ्यंगमर्ककुजजीवसितेषु पर्व
संक्रान्तिविष्टिषु विवर्जितयोगयुग्मे।
कुर्याद्द्वि२षट्६भुजग८दिक्१०तिथि१५शक१४विश्व१३
सख्ये तिथौ च न कदाचन भूतिकामः ॥ ७० ॥

व्याख्या—अभ्यंगमिति तैलाभ्यंगेन तैलाभ्यङ्गकरणं स्यात्प्रसिद्धं। पर्वाण्यर्केन्दुग्रहणदीपोत्सवा-दीनि। संक्रान्तिरिति सूर्यसंक्रमणदिवसे। योगौ व्यतिपातवैधृताख्यौ, ग्रहमुक्तस्य तु व्यतिपातादि इष्टोऽपि न स्नानमिष्टः। उक्तं च—

" रविमन्दारवारेषु विष्टौ वा व्यतिपातके ।
स्नातस्य भग्नमुक्तं शशिन्यशुभतारके ॥१॥ "

भुञ्जीतास्य नव वस्त्रा शुभेऽह्नि ध्रुवचान्द्रभे ।
पुनर्वसुकरश्रोत्ररेवतीनां द्वयेषु च ॥७१॥

व्याख्या–द्वयेष्विति, एवमष्टौ भानि ॥

राजावलोकनं कुर्यान्मृदुक्षिप्रध्रुवोडुभिः ।
वासवश्रवणाभ्यां च सुधीः सर्वार्थसिद्धये ॥७२॥

व्याख्या–राजेति यो यस्य स्वामी स तस्य राजा ॥

गजवाजिकर्म नेष्टं रौद्रे पूर्वा३त्तरा३विशाखासु ।
भरणित्रितयाश्लेषाद्वितयज्येष्ठाद्वयेषु तथा ॥७३॥

व्याख्या–गजानां कर्म शान्तिकदन्तकर्तनादि । अश्वानां शान्तिकर्मीयमनादि । रौद्रे इत्यादि भपषु तु कार्यमित्यर्थः । सामान्योक्तेऽपि कार्ये विशेषो ग्रन्थः—"अश्विनी१ पुनर्वसु२ पुष्य३ हस्तत्रयेषु६ गजानां, तथाऽश्विनी१ मृग२ पुनर्वसु३ पुष्य४ हस्त५ स्वाति६ धनिष्ठा७ शतभिषक्८ रेवती९ष्वश्वानां च कर्म कार्यमिति' ॥

गवां स्थानं च यानं च प्रवेशश्च न शस्यते ।
तिथौ भूतार्कदर्शाख्ये श्रोत्रचित्राध्रुवे च भे ॥७४॥

व्याख्या–गवामित्युपलक्षणत्वान्महिषतुरगमहिष्यादीनामपि । स्थानमिति बन्धनार्थं स्थानकरणं यानं गोचरार्थं । प्रवेशो गृहार्थं । भूतेति चतुर्दशी ॥

क्रयविक्रयौ न हि गवां हस्तज्येष्ठाश्विनीधनिष्ठाभ्यः ।
अन्यत्र पौष्णवारुणराधादित्यद्वयेभ्यश्च ॥ ७५ ॥

व्याख्या–अन्यत्रेति हस्तादिष्वेव कार्यो विनिमयः । क्वापि च—

"तीक्ष्णेषु पशुं दमयेत् दारुण्यं न ध्रुवेषु समाश्रयम् ।
पशुपोषणं विधेयं चरेषु दीक्षा रवं मृदुषु ॥ १ ॥"

इति ग्रन्थः ॥

हलस्य वाहनारम्भं न हि कुर्वीत कर्हिचित् ।
पूर्वासु कृत्तिकासार्पज्येष्ठार्द्राभरणीषु च ॥७६॥

व्याख्या–वाहनारम्भमिति प्रथमं हलेन भूम्युल्लेखनम् ॥

अथारम्भदिने किं भं शुभमित्यत्राह हलचक्रमाह—

हलचक्रेऽर्कभुक्ताद्भात्त्रयं नेष्टं शुभं त्रयम् ।
त्यजेन्नव शुभाय स्युः कृषौ भानि त्रयोदश ॥७७॥

"मकमुकायमार्गाणि ग्रादशाच त्रयं शुभम् ।
बीभोधी षोडशाग्रीणि एकविंशाधवा त्रयम् ॥ "

एव द्वादश शुभानि शेषाण्यशुभानि ॥

कृषिरूचे सूर्यर्क्षाद्विपु५ कु१रसे६न्दु१त्रि३भू१रसे६न्दु१युगे ४ ।
असुख१सुख२मध्य३लाभा४रति५रति६मध्या७र्थे८दु ख९कृत्स्कमश ॥७९॥

व्याख्या—अत्र कृषिचक्रे शनिचक्रवत्पुरुषोऽपि नराकारोऽभ्यूह्यः, ततो मुखादिस्थानेषु सूर्यभागारम्भाद्यर्क्षविभागैर्नक्षत्राणि, यथा—

कृषिपुरुषः

| | | |
|---|---|---|
| मुखे | ५ | असुखं |
| दक्षिणकरे | १ | सुखं |
| पादद्वये | ६ | मध्यमं |
| वामकरे | १ | लाभ |
| उदरे | ३ | अरति |
| मस्तके | १ | रति |
| नेत्रद्वये | ६ | मध्यमं |
| गुदे | १ | लक्ष्मी |
| पुच्छे | ४ | दुःखं |

जलाशय न कुर्वीताश्विनीभरणिमित्रमैः ।
आजपादश्रुतिस्वातिभाग्यवारुणमैस्तथा ॥८०॥

व्याख्या—जलाशयं वापीकूपतडागादिकं । आजपादं पूर्वभद्रपदा । भाग्यं भगदैवतं पूर्वफल्गुनी । वारुण्यम्बरशतभिषक् ॥

न वृक्षरोपणं कुर्यात्क्रूरार्द्रादित्यवह्निभैः ।
अश्लेषामारुतज्येष्ठाधनिष्ठाश्रवणैरपि ॥८१॥

व्याख्या—आदित्यं पुनर्वसु । मारुतं स्वाति ॥

नृत्तं मैत्रे स्याद्धनिष्ठाद्वये वा, हस्तज्येष्ठापुष्यपौष्णोत्तरेषु वा ।
संभानाद्य नाथरेस्कि च मुक्त्वा, धिष्ण्यं क्रूरं दारुणं वारुणं वा॥८२॥

व्याख्या—उत्तरात्रितयः । एषु नाट्यं कर्तुं शिक्षितुं वा प्रारभ्यते । संधानाद्यमिति मन्त्रिरादिकं नाथरम कार्यमित्यर्थः ॥

इत्युक्तान्यत्र विमर्शे नाममात्रमतान्युपयोगीनि कार्याणि । सन्ति चान्यान्यपि शुभाशुभानि कार्याणि । तेषामयं संक्षेपः पूर्वमप्रोक्तः—

' रित्तितिहि असुहजोगे कूरविलग्गाइ कूरवारे अ ।
आयरह कसिणपक्खे असुहं असमत्त विवरीअं ॥१॥"

अत्र क्रूरविलग्नात् इति पक्षम क्रूरषड्वर्गे क्रूरग्रहाध्यासितं क्रूरदृष्टं वा, मासिश्राद्धादिष्वपि पीडाभ्यासिबेषु क्रूरग्रहाध्यासितेषु पापोपमहाविद्देषु वा। क्रूरवारे च इति चराभ्यात् क्रूरग्रहहोराणां क्रूरकाले च विरुद्धाख्ये। "मसस्य विपरीतं तु" इति शुभे कार्ये विष्टयादीनि सर्वाणि शुभान्येव ग्रहणीयानि। लग्नमपि शुभषड्वर्गे शुभग्रहाध्यासितं शुभदृष्टं वा। मासमपि कार्यानुसारेण चरस्थिरादिषु शुभशुभानि सौम्यग्रहाध्यासितानि मन्तव्यानीत्यर्थः। न चैतेषु कार्येषु अभिज्ञत्वात्, "अत्र विवाहे दीक्षायां प्रतिष्ठायां च प्रस्तावे" इति च वक्ष्यमाणत्वात्। ये पुनरेतेष्वपि लग्नमावसीनु मिथ्यन्ति तेषां कुलेऽस्मिन् विमर्शे मौञ्जीबन्धादिप्रतिष्ठान्तकार्यामात्मविमर्शे च यात्रायां वास्तुनिवेशप्रवेशयोश्च सूत्रकृतैव लग्नबलान्युक्तानि। तेषु तु लोकमति तेष्वेव—

'शुभक्ष्मयोर्वरवशोः क्षेत्रेष्वथवेषु पुंसवनयोगे। द्विपदे लग्ने क्षीर्णेदविनि च गुरुशुक्रयुतदृष्टे ॥१॥
यद्वा त्रिकोणकेन्द्रस्थितयोरनयोः स्वजन्मलग्न वा। लग्नोपचयगे चन्द्रे जातो सुताणां मनुष्यार्णाम्॥२॥'

अत्र पुंसवनेति पुंसवनयोगो ज्ञातव्यः। स चैवम्—

'विषमर्क्षे विषमनवांशसंस्थिता गुरुशशांकलग्नार्काः। पुंजन्मकराः समभेषु योषितां समनवांशगताः॥१॥
बलिनौ विषमेऽर्कगुरू नरं स्त्रियं समगृहे कुजेन्दुसिताः। कमाद्विषमोपगतः शनैश्चरः पुंजन्मकरः॥२॥

॥ इत्याधानम् ॥ १

सीमन्तकर्म पुरुषे लग्नेऽस्य च त्रिकोणकेन्द्रस्थे।
क्षीणे त्रिकोणकेन्द्रस्थमपाह्मेष्वशुभरहितेषु ॥ ३ ॥

॥ इति सीमन्तः ॥ २

गुरौ भृगौ वा केन्द्रस्थे निशतीन्द्रपोपवर्गिभे।
जातकर्म शिशोः कुर्यान्नामविन्यसनं तथा ॥ ४ ॥

॥ इति जातकर्मनामस्थापने ४ ॥

कर्णवेधः शुभे लग्ने सौम्यग्रहविलोकिते।
क्रूरोज्झिते च लाभस्थितैः सौम्यग्रहैः शुभः ॥५॥

॥ इति कर्णवेधः ॥ ५

अन्नप्राशनलग्ने मूर्च्छादिरवे मदे फलमेवम्—

क्षीणे चन्द्रे भिक्षुः संपूर्णे सत्रदश्च मखा स्यात्। क्षेत्रमसितैर्वक्रप्रसैर्नीचक्रूरैर्महाव्याधिः ॥६॥
निधनत्रिकोणकेन्द्राग्न्तगैः फलं सप्तवेष तनुगेषु। क्रमात् बहाइसगयचन्द्रोऽनिशः शुभमुतोऽपि ॥७॥

॥ इति पूर्वोज्ञनम् ॥ ६

क्षौरं शुभकरमिष्टे चन्द्रस्थैर्मो न्याम् मृते मूर्ते।
द्वावशमनत्रिकोणायगैर्मकेन्द्रसुलग्नाद्धिकरम् ॥८॥

॥ इति क्षौरम् ॥ ७

चूडा शुभाम शुकरलग्नेषु सौम्येषु केन्द्रे मिथतो कुजेऽब्दात्।
क्षीणे चन्द्रागोऽब्दो जराम भानुः सुरतस्य च पंगुताम्यै ॥९॥

॥ इति चौलम् ॥ ९ ॥

सौम्यैस्त्वमोपचयैर्भे चन्द्रारम्भे गुरौ चाऽपि ।
विद्याशिल्पारंभौ जीवेन्दुबलयोगे चन्द्रे ॥ १० ॥

॥ इति विद्या१०शिल्पारंभौ ॥ १० ॥

शुभे विलग्ने शशिनि चराद्यौ गुरुवीक्षिते ।
हिबुकस्थैः शुभैर्नृत्यं काव्यं चारभ्यते बुधैः ॥११॥

॥ इति नाट्य११काव्यारंभौ ॥ १२ ॥

सीताशौ शुभराशिस्थे शुभेष्वत्रयवर्जितु ।
मन्त्रादिग्रहणं कार्यं हित्वा पापमहोदयम् ॥१२॥

॥ इति मंत्रादिग्रहणम् ॥ १३ ॥

पित्र्येशयाम्यमूलेन्दुभेषु गुरौऽष्टमेऽपि च ।
वेतालसिद्धिः पाताले स्वगौ श्रे कुंभलग्नगे ॥१३॥

॥ इति वेतालमन्त्रादिसाधनम् ॥ १४ ॥

हिबुकऽर्के गुरौ लग्ने धर्मारंभा रवेर्दिने ।
गुरुभ्रश्लग्नवर्गे वा शुभारंभास्तयोर्बले ॥१४॥

॥ इति धर्मारंभ१५ नन्द्यादिके१६ ॥

मोक्षार्थिना च दीक्षा स्थिराद्ये कर्मगे त्रिदशपूज्ये ।
पापैर्धर्माद्यैस्वहीनैः मासमित्रयोग ॥ १५ ॥

अत्र मासमित्रेति चतुरादिभिर्मैरेकस्थानस्थै प्रव्रज्यायोगः। तथा जन्मनि यत्र राशौ चन्द्रस्तत्रा सीशोऽन्यैर्ग्रहैरदृष्टः सन् शनिं पश्यति तदा प्रव्रज्यायोग । यदि वा तद्राशीशं तथाविधं शनिः पश्येच्च तदापि प्रव्रज्यायोगः ॥

॥ इति दीक्षा ॥ १७ ॥

पूर्णे चन्द्रे वेश्म४गेऽर्केऽम्बर१०स्थे जीवे लग्ने चाक्पतेर्वासरे च ।
श्रीमन्त्यायुष्याणि कार्याणि कामाण्युक्तस्थितेश्च राज्याभिषेकः ॥१६॥

॥ इत्यायुष्यकार्माणि ॥ १८ ॥

धर्मसरण कुर्यात् क्रूरैस्त्यक्ताष्टमान्त्यमैर्लग्ने ।
उपचयमेषु च शशिर्द्देऽप्यन्त्यापुपचयस्थे ॥१७॥

॥ इति धर्मव्यापार ॥ १९ ॥

भीषणसेवा विहिता शुभाय धवलासु सौम्यभेषु ।
निधनान्त्याष्टमरिपुस्थक क्रूरे विना रिष्टम् ॥१८॥

विना रिष्टमिति रिष्टयोगा जातकोक्तास्तदभावे इत्यर्थः ।

अत्र चन्द्रादये इति अप्रस्थे चन्द्रे । केन्द्रे ज्ये इति अप्रस्थे गुरौ ।

॥ इति रत्नसग्रहे३१श्लोके३२ ॥

किं बहुना ?

व्ययनैधनसंशुद्धौ सद्दापचयोदये ।
सर्वारमेषु संसिद्धिमन्त्रे पापचयस्थिते ॥ २९ ॥

सद्दापचयोदये इति इष्टपुंसा जन्मलग्नाज्जन्मराशेर्वोपचयस्था ये राशयस्तेषु अप्रस्थेषु ।

प्राय शुभा न शुभदा निधनव्ययस्था, प्रमान्त्यगौनिधनकेन्द्रगताश्च पापा ।
सर्वाश्वासिद्धिषु शशी न शुभो विलग्ने, सौम्यान्वितोऽपि निधनं न शिवाय लग्नम् ॥३०॥

अत्र निधनमिति इष्टपुंसो जन्मलग्नाज्जन्मराशितो वाऽष्टमं लग्नं क्वापि कार्ये न मान्यमित्यर्थः॥

क्रूरकर्म पुनरवम्--

अभिचारविधिर्भिर्लग्नौमन्त्रे क्रूरस्य योगवर्गस्थे ।
रिपुनिधने लग्नस्थे रिष्टयोगे शुभ बलिनि ॥ ३१ ॥

अभिचारा मन्त्रादिनोच्चाटनं । रिपुनिधने इति रिपोर्निधनस्थितस्य जन्मलग्नाज्जन्मराशेर्वा योऽष्टमा राशिस्तस्मिन्लग्नस्थे सति इत्यादि । यद्यु यानि निरवद्यकर्माणि तानि शुभैग्रहैर्भूमिपादर सीयानि यानि तु मर्मघातकानि तानि पापमीरुभिः परिहरणीयानि, न च सावद्यप्रवृत्त्येभ्यः प्रह्रपणीयानि ॥

॥ इति कार्यद्वारम् ॥ ७ ॥

॥इति श्रीमति आरंभसिद्धिवार्तिके कार्यपरीक्षारमकस्तृतीयो विमर्शः ॥ ३

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणी-
गच्छेन्द्र मधुरत्नशेखरगुरुर्येऽभ्यर्चते सांप्रतम् ।
तच्छिष्याभयहेमहंसरचितस्यारंभसिद्धे सुधी-
शृङ्गारानिववार्तिकस्य विवरके संस्मो विमर्शोऽभवत् ॥१॥"



" पहि कुसलकम्मि तिहि कज्जसिद्धिकामं मुहुत्तमो होइ।
दिसि सेवं आरम्भं पंचेव सुक्खसपती ॥ १ ॥ "

इति दिनशुद्धौ। तथा—" विघ्नादिगुणाः सर्वे शुभेन लभ्यन्ते " इति सप्तः ॥

मध्या तु ध्रुवपूर्वात्रयेणाद्वयवारुणेषु यात्रा स्यात्।
निन्द्याग्नेभरणीद्वयचित्रात्रयसार्पपैत्रेषु ॥ ४ ॥

व्याख्या—मध्येति यानि इह भानि नोक्तानि तान्यनिष्टानीति भाव। निन्द्येति यत "अत्र प्रयाणोऽशस्तेषु कथञ्चित्त निवर्तते" इति व्यवहारसारे। नारचन्द्रे तु 'ज्योत्तरमूलमो: मेघा, त्रिमास्वातिमघपवनिशासु मध्या, कचयत्रये च निन्द्या यात्रा" इत्युक्त विशेषस्तु—

" अशुभे मे शुभे पक्षे दिवा यात्रादि साधयेत्।
शुभे मे त्वशुभे पक्षे रात्रौ यात्रादि साधयेत् ॥ १ ॥ "

यतः—" नक्षत्रं चन्द्रप्राप्तौ दिने बलवती तिथिः " इति सप्तः ॥

अथ अविशेषयात्रायां दिनांशनियममाह—

न दिवाद्ये ध्रुवमिश्रैस्तीक्ष्णैर्मध्येऽथ लघुभिरन्त्येऽंशे।
अंशेष्विति रात्रेरपि मैत्रोग्रचरैश्च न भैर्यात्रा ॥ ५ ॥

व्याख्या—त्रिभागीकृतस्य दिवसस्याद्येऽंशे ध्रुवमिश्रभैर्यात्रा न कार्येत्यादि इति त्रिभागीकृतरात्रेराद्येऽंशे मैत्रभेषु यात्रा न कार्या। उग्रभेषु द्वितीयेऽंशे चरभेषु तृतीयेऽंशे चेति। यतः—

" धनहानिर्ध्रुवैर्मिश्रैर्विपत्ती मरणं पथाऽऽक्रमणेन।
पश्चादेभिः कालैर्यातेश विपर्ययमिदमात् ॥ १ ॥ "

अस्य वक्ष्यमाणपरिघस्य चापवादमाह—

सर्वदिग्द्वारकौ पुष्यहस्तौ मैत्राश्विनी युतौ।
तावेव सर्वकालीनौ मृगश्रुतिसमन्वितौ ॥ ६ ॥

व्याख्या—सर्वासु दिक्षु विदिक्षु च द्वारं ययोस्तौ, एषु परिघो भविष्यत्क्वं च न स्यादित्यर्थः। ' अनयोरेतस्मादपि सर्वदिग्द्वारके " इति नारचन्द्रे। सर्वकालीनाविति एषु भेषु न दिवाद्ये इत्यादि न भवेत्यभित्यर्थः। दिनशुद्धिकृता तु दिग्यात्रायां यद्भानां सर्वकालीनत्वमूचे। तथाहि—

" पुस्साविधि सम्मकार्यं दिसिविदिसिनिर्वं विहारसमयम्मि।
पुस्सम्मिधनिमिगसरसा रेवइसवणा गहेमम्मा ॥ १ ॥ "

अथ यात्रायां दिक्शुद्धि वदन् परिघमाह—

सप्त सप्त गमने वसुभक्षाद्युत्तराप्रभृति दिक्षु शुभानि।
घटिकायुपरिघोऽत्र न लंघ्यो, मध्यमानि तु मिथः
स्वादिशोः स्युः ॥ ७ ॥

व्याख्या—अनुराधां अभिजित, तत आरभ्य सप्त सप्त भान्युत्तरादिचतुर्दिक्षु गमने शुभानि । अयं भावः—एतानि सप्त सप्तोदीच्यादिदिग्द्वारकाणि । तथाहि—धनिष्ठादिसप्तभान्युत्तरद्वारकाणि, कोऽर्थः ? एषु भेषूदीच्यां यात्रा शुभेति श्रीरत्नमालाभाष्यप्रतिपादितत्वादिषु । एवं कृत्तिकादिसप्तपञ्चानुप-धावीनि त्रीणि सप्तकानि क्रमात् पूर्वदक्षिणपश्चिमदिग्द्वारकाणीत्यतोऽस्मिन् सप्तकत्रये क्रमात् पूर्वोदिदिक्षु यात्रा शुभा । अन्येति गमन । वह्निवाय्विति सद्दिग्चतुष्कचतुर्दिक्षु कृत्तिकादिसप्तसप्त भेषु स्थापितेषु वायव्याग्नेयकोणयो परिघः स्यात् । तस्य स्थापना यथा—

( समीपस्थपत्रे विलोक्या नं )

अयमाग्नेयवायव्यकोणावधिवितान्तरगरेखारूप परिघो बोद्धव्यः । अयमर्थः—धनिष्ठादिचतुर्दश भेषूत्तरप्राच्योरेव, मघादिचतुर्दशभेषु दक्षिणप्रतीच्योरेव च गन्तव्यं । मन्यमानीति मिथः स्थानि लङ्घनभूतानि परिघैकपार्श्वस्थत्वेन यानि यानि सन्ति तेषां विलोमस्थानि पार्श्वस्थदिग्युक्तानि यानि यात्रायां सम्पमानि स्युः न शुभानि नाप्यशुभानीत्यर्थ' । अयं भावः—धनिष्ठासप्तकस्य कृत्तिका सप्तकं सं, तद्दिक् पूर्वा, तस्यां गमने धनिष्ठासप्तकं सम्यम । एवं कृत्तिकासप्तकस्य धनिष्ठासप्तक सं, तद्दिक् उत्तरा, ततस्तस्यां गमने कृत्तिकासप्तकं मध्यमं । एवमन्यत्रापि भाव्यं । ननेव परि घोक्त्या दिक्षु यात्रायां मनियम उक्तः विदिक्षु यात्रायां तु को भनियमः ? उच्यते—पूर्वद्वारमैरा ग्नेयी गमेत दक्षिणद्वारैर्नैर्ऋती, पश्चिमद्वारैर्वायवी उत्तरद्वारमैरैशानी चेति स्फुटमेव विदिशां दिगनु गामित्वात् । उक्तं च दैवज्ञवल्लभे—" यायात् पूर्वद्वारमैरपि काष्ठां प्राग्दक्षिण्येनैवमाशा विपूर्वाः " । अत्राशा विपूर्वा इति विदिश इत्यर्थः । विशेषस्तु—

> "स्वामिनः सप्त भौमाद्या क्रमतः कृत्तिकादिषु ।
> प्राच्यादौ तत्समाख्येषु तेषु यात्रा महाफला ॥१॥ "

इति पूर्णभद्रः । अस्यार्थ - कृत्तिकादिसप्तकस्य क्रमेण भौमाद्याः क्रान्ताः सप्त ग्रहाः स्वामिनः तेषु स्वस्वमध्येषु पूर्वस्यां यात्रा शुभा । एवं मघादिसप्तभानां तथैव भौमाद्याः सप्तेशाः, तेषु तत्त ग्रहेष्वपूदीच्यां यात्रा शुभा । एवं शेषदिशोरपि भाव्य । तथा—

> "प्राच्यादिषु चरन् भानु सप्तके कृत्तिकादिके ।
> वितनोति दिशामस्तं यात्रा साधु कृता भिये ॥१॥"

इत्यपि पूर्णभद्रः ॥

> उल्लंघ्य परिघोऽपि लग्नमलत शूलं तु भानां सदा,
> हेयं तद्य पुनः सुरेश्वरदिशि ज्येष्ठाम्बुविश्वोडुभि ।
> राधावैष्णववासवाजपदभैर्याम्यां प्रतीच्या पुन
> र्मार्दया मूलपुजा तथोत्तरदिशि स्यादर्यमर्क्षेण च ॥८॥

व्याख्या—उल्लङ्घ्य इति वक्ष्यमाणेषु कार्येषु परचक्रागमादिषु युद्धे पावस्थ्यादिसुरत महत्सा मेदे यात्राक्रमे सति परिघलङ्घनं न दोषायेत्यर्थः । सर्वेति धूलनक्षत्रेषु सत्सु समयशुद्धावपि न गच्छन्, यतो धनूक्तदोषः शुद्धक्रमेनापि न टलति । उक्तं च— 'स्वमदमेऽपि शूलभ शूलके नास्ति निवृत्तिः"

चरसंमुख इति क्रमेणोपरिष्टोरगमने पाशस्थितः पश्चम्यां पश्चम्यां तिथि सम्मुखः तदा काल: स्यात् यदा पाशः पाशस्तदोर्ध्वं कालः यदा पूर्वे पाशस्तदाऽध कालः संमुखस्तस्यैवमेव मव मत् । उक्तं च—

"पुव्वाइदसदिसाई कमेण तिथि पडिवयाइ हुइ पासो ।
तस्समुहो अ कालो गमणे दुन्नि वि समुहचत्ता ॥ १ ॥"

इति दिनशुद्धौ । एवं च कालस्थापना—

| पश्चिम | वायव्य | उत्तर | ईशान | पूर्व | आग्नेयी | दक्षिण | नैर्ऋत | अधः | ऊर्ध्व |
|---|---|---|---|---|---|---|---|---|---|
| शु. ६ | ७ | | ९ | १ | ११ | १२ | १३ | १४ | १ |
| कृ. १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १ |
| ११ | १२ | १३ | १४ | १५ | शु १ | २ | ३ | ४ | ५ |

स तिथि क्रमः । सोऽपायेति, अयं भावः—पाशसम्मुखो गमनाद्यमदक्षिणायेन गच्छतां शुभौ । उक्तं च दिनशुद्धौ—

" कुज्जा विहारि वामो पासो कालो अ दाहिणओ " । इति

वास्तुविद्याविदस्त्वाहुः—"शुक्लप्रतिपदादितिथिचतुष्के पूर्वाग्नेय्यादिदिक्चतुष्के पाशः, पश्चम्यामूर्ध्वं । ततः पञ्चम्यादितिथिचतुष्के पश्चिमवायव्यादिचतुर्दिक्षु पाश", दशम्यां तथा । पुनरेकादश्यादितिथिचतुष्के पूर्वाग्नेय्यादिचतुर्दिक्षु राकायां तूर्ध्वे । पुनः कृष्णप्रतिपदादितिथिचतुष्के पश्चिमवायव्यादिचतुर्दिक्षु पाशः, पश्चम्यां तथा । एवमेव तृतीयाऽप्यावृत्तिर्ज्ञेया । तत्संमुखश्च सदापि काल इति । अत एव पूर्वादिषु मासादावेः स्थानत्रयापेक्षयापि वैनैरपरे, अथ ऊर्ध्वं चाऽधस्च कालस्य चाऽऽवश्यकमवादिति" । यथा—

"तिथवारं पुव्वाइक्कमेण संहारि भत्त ठाणि सव्वी ।
कालं तत्थ वि भायसु तस्सम्मुहुपास भणइ इगे ॥ १ ॥"

इति व्यवहारसारे । अधेशानवर्ज गम्भीरं ईशगृहत्वेन तत्र कालस्य मनेशाभावगादिति ये प्राहुः । एषां मते वारप्रतिपदादिक्रमेण कालपाशा, न तिथिमतिचरतौ ॥

राहुचारमाह—

राहुरसमुखयामोऽष्टसु यामार्धेष्वहर्निशं धुमुखात् ।
क्रमशः पञ्चर्षा पञ्चमामिष्ट प्राच्यादिषु प्रचरन् ॥१४॥

व्याख्या—धुमुखादहर्निशमष्टसु यामार्धेषु क्रमशः प्राच्यादिषु पञ्चर्षां पञ्चम्यां दिशि प्रचरन् राहुरसंमुखयामः सन्निधा अथ इत्यन्वयः कार्यः । असंमुखेति वामो पृष्ठतो दक्षिणश्च वर्ये इत्यर्थः ॥ यामार्धमत्रेऽभिसन्धिः प्रागवत् । अहर्निशमिति दिवा रात्रौ च राहुश्चरति । धुमुखात् प्रभातादारभ्य पञ्चर्षां पञ्चम्यामिति आद्ये यामार्धे प्राच्यां, द्वितीये ततः पञ्चम्यां वायव्यां तृतीये ततोऽपि पञ्चम्यां दक्षिणस्यामिति । उक्तं च हर्षप्रकाशे—

"यामर्द्धे राहु भई पू१ वा२ द३ ई४ प५ आ६ उ७ ने८ दिसिसु । "

अथवरदक्षिणं गमने तु वा दिक् तुर्या तुर्या स्यात् । यदुक्तं व्यवहारप्रन्थे—

"आद्यासु प्रथमाद्येषु प्रहरार्धेष्वहर्निशम् । पूर्वस्यां वायवी राहुस्तुर्यां तुर्यां भ्रमेद्दिशाम् ॥ १ ॥"

राहुचारस्थापना—

| द ११ | पू ४ | आ २ न |
|---|---|---|
| ब २८ | राहुचक्र | १२ द |
| वा ८ | १ ७ | १२ नै |

एवमहोरात्रं यावद्दिग्भ्रमणीति ॥

चन्द्रचारमाह—

चन्द्रश्चरति पूर्वादौ क्रमाद्दिक्चतुष्टये ।
मेषादिष्वेष यात्रायां सम्मुखस्त्वतिशोभनः ॥ १५ ॥

व्याख्या—मेषादिचतुष्कत्रयस्थश्चन्द्रः क्रमात् पूर्वादिचतुर्दिक्षु चरति । एवं सिंहादिचतुष्कधन्वादिचतुष्कयोरपि । चन्द्रचारस्थापना—( समीपस्थपत्रे विलोक्या )

दिनशुद्धौ तु चन्द्रस्यापि शुक्रवद्विधिश्च संमुखत्व माणमूचे । यथाहि—

"उदयवसा १ अहवा दिसिर वारमवसओ २ हवइ ससीसमुहो ।
सो अभिमुहो पहाणो गमणे अभिमाईं वरिसंतो ॥ १ ॥"

अतिमाभय इति, उक्तं च नारचन्द्रे—

"अयाम दक्षिणा राहुर्योगिनी वामतः स्थिता ।
पृष्ठतो वृषभश्चैव चन्द्रमा सम्मुखः पुनः ॥ १ ॥"

अतिशयेन दक्षिणोऽपीन्दुः शुभ इत्युच्यते यदुक्तं नारचन्द्रटिप्पनके—

"संमुखीनोऽर्थलाभाय दक्षिणः सर्वसंपदे ।
पश्चिमः कुरुते मृत्युं वामश्चन्द्रो धनक्षयम् ॥ १ ॥"

रविचारमाह—

रविर्द्वौ द्वौ तु पूर्वाद्यौ यामौ राज्यन्त्ययामतः ।
यात्रास्मिन् दक्षिणे वामे प्रवेशः पृष्ठगे क्षयम् ॥१६॥

व्याख्या—राज्यन्त्येति रात्रेरन्त्य दिनस्य प्रथम याम चार्कः प्राच्यां तिष्ठति, दिनमध्यम यामौ तु दक्षिणस्यां, दिनान्त्ययाम रात्र्याद्ययाम चापरस्यां, रात्र्यर्धयमयामौ तूदीच्यां । नारचन्द्र तु प्रथमहोराप्रमुखसमयादारभ्य भ्रमणं गाथादिभिरष्टधानमूच । यथाहि —

"स्वस्योदयस्य समयात्प्रथमयामादितः क्रमात् ।
संचरन्ति ग्रहाः सर्वे सर्वकाले दिगष्टके ॥ १ ॥"

यात्रति दक्षिणेऽर्के यात्रा कृता शुभा । यथाः—

"न तस्यारातिरो विद्विन धनधरत्रे भयम् ।
व्यतिपाता न दुष्येत यस्यार्को दक्षिणस्थितः ॥ १ ॥"

नक्षत्रसमुच्चयेऽप्युक्तं—

"पूर्वाह्ने चोत्तरां गच्छन् प्राच्यां मध्यदिने तथा ।
दक्षिणामपराह्णे तु पश्चिमामर्धरात्रके ॥ १ ॥"

एवं गमनेऽर्को दक्षिण एव स्यादिति भावः । अतः पुनरपि चन्द्रादिचारानुक्रममथमाह—

"रविशशिकुजसौरीणां मकरादाद्युत्तरा च पूर्वा च । याम्या च कर्कटाद्यौ याम्यामाशां प्रतीची च ॥१॥

शुक्रस्योदयास्तदिनसंख्या चौत्सर्गिक्यपि नारचन्द्रटिप्पनके—

"प्राच्यां मृगुर्भ्रमति तत्र२५७ दिनानि दिव्यं, तत्रास्तगस्तु नवमासि७२ दिनान्यदृश्यः।
तिष्ठेच्च पश्चिमदिशि२५६ दिवसान् प्रतीच्यामस्तंगतस्त्विह सप्त१२ दिनान्यदृश्यः ॥१॥

तथा सम्मुखगमनादेऽप्यस्तमिते यात्रा दुष्टेति दैवज्ञवल्लभे ॥

प्रतिशुक्रं त्यजन्त्येके यात्रायां त्रिविधं बुधाः ।
तस्मात्प्रतिबुधं कष्टं ततोऽपि प्रतिसोमजम् ॥ १९ ॥

व्याख्या—संमुखोऽस्तमितस्त्वात् प्रतिकूलशुक्रः प्रतिशुक्रः, एवमग्रेऽपि । त्रिविधमिति इदमपि मत एकपक्षः समर्थ, येन प्रत्याशुक्रं त्याज्यमस्तु तथोदयसंमुखीन इति तदेवमभिमतकार्यविपर्ययं सो स्वे तु यथाशक्ति त्रिविधमपि संमुखत्वं त्याज्यमिति ग्रहम्यं । तथा चोक्तं दैवज्ञवल्लभे—

"वसिष्ठाद्विकमन्नेभापर्यन्तं भगवं मृगुः । यदा चरति नोदीची न याची च तदा भवेत् ॥१॥
मघादिपञ्चभान्यानि मानि शुक्रे यदा चरेत् । नापाची न प्रतीची च तदा गच्छेत्त्रिवीथिषु ॥२॥"

तस्मात् प्रतिकूलमिति शुक्रादपि सौम्यः संमुखः कष्टतरत्वात्कष्टः तमपि त्रिविधं त्यजन्तीति योगः । तस्मादपि सोमजो बुधः संमुखः कष्टः । उक्तं च दैवज्ञवल्लभे—

"प्रतिशुक्रेऽपि निर्गच्छेदनुकूले बुधो यदि ।
गतः प्रतिबुधेनार्थैः सम्पदं रक्षितुं भवेत् ॥ १ ॥"

शुक्रगतीमबुधयोरपि संमुखत्वं दक्षिणसंमुखत्वं च त्याज्यमिति त्रिविक्रमः । बुधः संमुख एव त्याज्य इति तु रत्नमालाभाष्ये ॥

वत्सचारमाह—

वत्सः प्राच्यादिपूदेति कन्यादित्रित्रिगे रवौ ।
प्रवासयास्तुद्वाराद्यप्रवेशाः समुखेऽत्र न ॥ २० ॥

व्याख्या—प्रवासो दूरदेशयात्रा, वास्तु गृहादि तस्य द्वारं न निवेशयेत्, मध्यदिने इत्यर्थो विनादिप्रतिमा तस्याः प्रवेशो धनिकगृहागमनं । अत्रेति वत्से । नारचन्द्रटिप्पनके वत्सरूपमेवं प्रोक्तं—

'चतुरस्रं पार्श्वं दस्ताः शृङ्गयुगं पादिसंयुता त्रिशती ।
पद्मादिपुच्छशिरसा भूप११मव९त्रि३शर५करमानम् ॥१॥"

स्थापना—

| दस्ताः १<br>देहा | ११<br>भेमि | १६<br>पदा | ९<br>नाभि | २<br>कुक्षौ | ५<br>शीर्षे |
|---|---|---|---|---|---|

विशेषस्तु—

" पक्ष१दिन२तिथि३तिथि४तिथि५दिक्६ घरवासराम्७ ।
वत्सस्थितिर्दिक्षत्प्रोक्ते मत्स्येऽत्र तसमाश्रिते ॥ १ ॥ "

तथैव स्थापना—( समीपस्थपत्रे विलोक्या )

इदं ज्योतिषमाते । अथिवत्सस्य वास्तुलक्षणमाह ॥

समुखोऽयं हरेदायु पृष्ठे स्याद्धननाशन ।
वामदक्षिणयोः किंतु वत्सो वाञ्छितदायक ॥२१॥

व्याख्या—सुगमः। अन्येऽर्कादिसर्वमहार्णां वत्सवद्भूगृहाणेवमाहुः—

"मीनादित्रयमादित्यो वत्सः कन्यादिकत्रये ।
धन्वादित्रितये राहुः शेषाः सिंहादिकत्रये ॥१॥"

अत्र पूर्वादिदिक्षु वसन्तीति शेषः। सर्वेषां स्थापना—( समीपस्थपत्र विलोक्या )

अत्र प्रसङ्गात् शिवचक्र लिख्यते यथा—

मेषेऽर्कादुत्तरादौ दिशि विदिशि शिवो मासमेक तथा द्वौ,
संस्था संस्थितो द्विर्भमति मृसमहोरात्रमध्ये नु सख्या ।
अष्टम्यां मासिके द्वे दिशि विदिशि भद्रीपक्षके चैव तिष्ठन् ,
चन्द्रादेः मासिकूल्यं हरति किरति स दक्षिण पृष्ठगो-ऽथ ॥१॥

अत्र चन्द्रादेरित्यादिसम्प्रदायागमवाक्यानां चत्पूष। शिवचारस्थापना—

( समीपस्थपत्रे विलोक्या )

इयं च स्थापना स्थूलमानेन। सूक्ष्मशिवा पुनरेवम्—

'सक्रान्तेराद्यपक्षे स्वदिशि शरच पला-न्यथ भुक्त्वा भ्रमाभ्यां,
पश्चात्सृत्वा तस्यां दिशमटति दशैव पला-न्यथ ।
वृद्धिः पञ्चोत्तरैवं प्रतिदिवसमहो तावदेतस्य यावत् ,
संक्रान्तेरन्त्यपक्षे स्थितिरपि क्रमं सार्धनाडीद्वयं स्यात् ॥२॥"

अत्र भ्रमाभ्यामिति अहारात्रेण वावन् शिवो द्विर्भमति। तत्र प्रथमभ्रमणे सार्धपलद्वय स्वदिशि तिष्ठति, द्वितीयभ्रमणेऽपि पुनरपरं सार्धपलद्वय एवं पलपञ्चक सक्रान्त्या प्रथमदिने भ्रमणद्वयेन स्वदिशि शिवः स्थित्वा ततः सूक्ष्म्याऽन्यदिशि याति। एवं द्वितीयदिनेऽपर पलपञ्चकमिति दश पलानि स्थितिः। एवमेव तृतीयदिने पञ्चदश पलानि। एवं प्रत्यहं पञ्च पञ्च पलानि तावद्वर्धं नीयानि यावत्सक्रान्तेश्चरमे त्रिंशे दिने सार्धशतपलः सार्धं घटीद्वय पूर्णं शिवस्य स्वदिशि स्थितिः स्यात्। वत्तु पुनः सहारेण द्वितीयदिवस्यागतव्यायमत क्रमो ज्ञेयः।

"विशाखे मधुहनने रवे मृगटके तथा। पृष्ठे चैव वदास वा पृष्ठे गुरौ शिवे नमः ॥३॥
स्वराश्च शकुना दुष्टा भद्रा महवर्क तथा। दिग्शोधा यागिनीमुख्या भ्रमवाः स्युः शुभे शिवा॥४॥"

तथा—

"सर्वेषामपादीत मध्यं कर्म तत्कालसंभवम्।
एकत्रशिम्पर्ग कृत्वा क्रमेणुद्धे न संशयः ॥१॥

भस्यार्थः—अत्र यत्रावर्कोऽस्ति तत्पूर्वस्यां दस्या तत आरभ्य सूक्ष्मया गम्यत, ततश्च तदन्तो यद्वर्तमानं कर्म स्यात्तत् पृष्ठतो दक्षिणतो वा कृत्वा युद्धानि कुर्वन् जयी स्यात् ॥

उक्ता यात्रायां समयशुद्धिर्दिक्शुद्धिश्च, अथ चेष्टानिमित्तादीनां शुद्धिमाह—

उत्सवमशनं स्नानं प्रगुणं चोपेक्ष्य मङ्गलमशेषम् ।
असमापिते च सूतकयुगेऽङ्गनर्तौ च नो यायात् ॥२२॥

व्याख्या-प्रगुणत्वं सर्वेषु योज्यं । उत्सवः कौमुद्यादिः । स्नानमुद्वर्तनस्य सामान्येन वा । मङ्गलं विवाहपुत्रजन्मादि । सूतकयुगं जातमृतसूतकभेदात् ॥

अवमन्य माननीयान्भर्त्स्य स्त्रीं च कमपि सताड्य ।
बालमपि रोदयित्वा जिजीविषुर्नैव निर्गच्छेत् ॥२३॥

व्याख्या-अन्यैरपि श्लोकोक्तं यत्र—

"प्रमत्तो व्याधितो भीतः श्रान्तः क्रुद्धो बुभुक्षितः । अध्वानं न प्रपद्येत क्लीबवेषस्तथैव च ॥१॥
रात्रौ तु मैथुनं कृत्वा प्रभाते योऽभिगच्छति । यात्राकालेऽथवा मासे मैथुनं वा निषेवते ॥२॥
वा वा मत्स्यामिषे भुक्त्वा पुनर्गृहमुपागतः । इत्येवमादिदोषाभिः सिद्धिर्नास्त्यभिगच्छतः ॥३॥"

क्षुतगृहकलहज्वलनोत्तुपुच्छदुर्वचनवसनसङ्गाद्यम् ।
अशुभं यात्रावसरे शुभमपि शकुनागमाद्विन्द्यात् ॥२४॥

व्याख्या-क्षुतेति उक्तं च—

"सर्वत्र क्षुतमशोभनमुक्तं गोवृषोपक्रान्तं रुचिरं तु ।
केचिदाहुरफलं हि जराघ्नसूक्ष्मपीनपिक्षयकृतं च ॥१॥"

गृहेति गृहस्य कलहगमनाभावो योज्यः । ओतुपुच्छेति मरिचादिविपुच्छमपि । दुर्वचनं मा गाः मरिष्यसीत्याद्यमङ्गल्यवाक्यं । वसनग्रहणस्य मङ्गः पर्यादावेव निषेधः । आपसङ्गात् शिरोधृत दूषितस्वरूपादि । शुभमपीति शुभाशुभं शकुनं ज्ञात्वा यात्रां कुर्यात् कुर्यात्तेति भावः । विशेषस्तु—

'रिक्तोऽनुकूलः कुम्भोऽस्य पूर्णश्च प्रयोजितः ।
विना विघ्नारवानिजो यथाशेषसिद्धिदः ॥१॥"

इति भारतव्यवहारे । अस्याय भावः—यात्रायां यत् कश्चित् रिक्तकुम्भहस्तो जलार्थी अनुरागेन सह समेति तदा सोऽपि घट इव पूर्णीभूय निवर्तेत । तथा—

"भाष विरुद्धं शकुने मतीत्य, यात्रान्नृपः षष्ठ च पद् च यायात् ।
अष्टौ द्वितीये द्विगुणोन्मृतस्ये प्रणम्य नूनं गृहमभ्युपेयात् ॥१॥"

इति रत्नमालायां । अत्र प्राण पदस्य प्राणायामः । षड् वा षड् वेत्येककाः । अष्टौ द्विगुणान् षोडशप्राणाः । शकुनागमादिति वसन्तराजादिशकुनशास्त्रात् । अवमन्यानिसम्भा—अन्यैराचार्यैः स्वस्वग्रन्थेषु यात्राविषये कथंचित्शकुना अपि निःसारत्वात्—अस्माभिस्तिरस्कृताः शकुनशास्त्रेऽपि तत्परिज्ञानसंभवाच्च न ते प्रोक्ताः ॥

चातुर्वर्ण्यसाधारणीं यात्रामुक्त्वाथ रिपुविजयप्रयाणानां नृपादीनां यात्रासिद्धेः श्लोकैः कथयन्नादौ दुर्निमित्तपरिहारमाह—

"चतुष्पदा ग्राम्यद्विपदा विशिष्टा, सरीसृपश्चाम्बुचरास्तु भक्ष्या ।
सिंहस्य वश्या विसरीसृपाः स्युस्सर्वे मनोकम्पवरास्तथोऽन्यत् ॥ १ ॥
स्वकाम्बुसंभूतसरीसृपाख्या, भवन्ति वश्या बलिनां स्वकानाम् ।
समा पुसंस्था विषमान् भजन्ते, वश्या स्वन्यां विषमाः समानाम् ॥ २ ॥"

अनयोरर्थ —मेषवृषसिंहा धनुःपूर्वार्धं मकरपूर्वार्धं च चतुष्पदाः, मिथुनकन्यातुलाकुम्भा धनुरपरार्धं च मनुष्याः, कर्कमीनौ मकरपश्चार्धं च जलचराः, सरीसृपो वृश्चिक इति । तत्र सिंहं विनाऽन्ये मेषवृषवृश्चिककुम्भा मानुषाणां वश्याः, जलचराः कर्कमकरमीना मनुष्याणां भक्ष्याः, सिंहस्य वृश्चिकं विना सर्वे वश्याः । अन्यदिति वृश्चिकस्य सिंहोऽपि वश्यः । सर्वे पुंराशयः कन्यायाः वश्याः, धनुषः सर्वोऽपि वश्य इत्यादि । स्वकाम्बुसंभूतेति यदि द्वावपि राशी स्वजातौ जलजौ सरीसृपौ वा तदा द्वयोर्मध्ये यो बलिष्ठस्तस्येतरो वश्यः, यथा वृषस्य मेषो वश्यः, मकरस्य मीनकर्कौ वश्यौ, वृश्चिकस्यापरे वृश्चिको बलहीनतरे सति वश्यः स्यात्, मेषद्वयवृषद्वयादीनां संभवेऽपि च वृश्चिकवदेव बलाधिक्य विचार्य वश्यता भावनीया । समा पुंसस्था इति इत्युक्तं किञ्च दिवा रात्रौ वा, तत्र दिवा समराशयो विषमराशीनां वश्याः, रात्रौ तु विषमराशयः समराशीनां वश्या इति । अस्य प्रयोजनं तु 'वश वश्य राश्येऽप्यसौ" इति श्लोके वक्ष्यति ॥

जन्मकाले शुभैर्युक्ता द्वितीयास्तरणेश्च ये ।
निष्क्रूरा निर्विकाराश्च ते लग्ने राशयः शुभा ॥ ३२ ॥

व्याख्या—द्वितीया इति येषां किञ्च जातक भगिसंज्ञा, 'सूर्याद्वितीयमृक्षं वेसि'" इत्युक्तः । निष्क्रूरा इति जन्मकाले येषु क्रूरग्रहो नामूत् । निर्विकारा इति क्रूरमुक्तराशिः सविकारः, पश्चात् शुभैस्तु निर्विकारः जन्मकाले ये राशयः शुभास्ते यात्रालग्ने शुभाः ॥

षष्ठं वश्यं स्वलग्नाद्योर्न च वश्य द्विषस्तयो ।
शत्रोरेवाष्टमं ताभ्यां लग्नं यातुर्जयावहम् ॥ ३३ ॥

व्याख्या—यथाशक्यं सौवजन्मलग्नजन्मराश्योर्वश्यं स्यात् द्विषो जन्मलग्नस्य जन्मलग्नजन्मराश्योर्वश्यं च । तथा शत्रोरेव न तु स्वस्य ताभ्यां जन्मलग्नजन्मराशिभ्यां यदष्टमं स्यात्तल्लग्नं यात्रायां शुभम् ॥

इत्युक्तमष्टभिः श्लोकैर्लग्नम् । अथ 'लग्ना होरागस्तृतीय" इति द्वयप्रकाशोक्तयात्रायां होरादिवर्गचक्रमाह—

विमुक्ताक्रान्तभोग्यानि राश्यर्धान्युष्णरश्मिना ।
ऊर्ध्वतिर्यगधोमुख्यो होरा स्युरुदयावधि ॥ ३४ ॥

व्याख्या—या राश्यर्धेन मुक्ता मुक्ता सा ऊर्ध्वमुखी, भुज्यमाना तिर्यङ्मुखी भोक्ष्यमाणा त्वधोमुखी, पुनस्तस्येवमन्यभिक्षः क्रमादूर्ध्वतिर्यगधोमुख्यः पुनस्तथैव तिस्रः क्रमादूर्ध्वाद्यभिमुख्यः, एवं पुनः पुनरुदयावधीति सूर्योदय यावत् । यदा उदयो भवेत् तत्राधिकृता होरास्तथः स यावत् एवं त्रिविधा होराः कल्प्याः । एवं चाहोरात्रे चतुर्विंशतिहोरात्मक त्रिविधहोराणामावृत्त्याष्टकत्रय स्युः ॥

वस्तुषित' खगोऽर्ध२ । तृतीयो नरः फलामिषवते हैमतूणचर्मयुद्गमरूपो रत्नचित्रितो धनुर्हस्तो वने मगान् मीयपते चतुष्पदोऽयं ३।७ वृश्चिके आद्यः स्त्री नग्ना स्थानच्युता सर्पनिबद्धपादा मनो रमाऽम्भिरव कूलमायाति१ । द्वितीयः स्त्री भर्तृकृते सर्पावृताङ्गी कूर्मकूमाकृतिः स्थानसुखानि वाञ्छति२ । तृतीयो नरः सिंहरूपश्चिपिटकूर्मतुल्यास्यः भयं कूर्मधनुष्पदम ३।८। धनुषि आद्यो नर आयतधनुष्पाणिर्नृमुखोऽश्वकायः चतुष्पदोऽर्ध१ । द्वितीयः स्त्री सुरूपाऽब्धिरत्नानि विभजन्ती गौराङ्गी२। तृतीयो नरो गौरो सितश्मश्रु दण्डहस्त कूर्चाकौशेयचर्मवाही ३।९। मकरे आद्यो नरो रोमशः सूकराङ्गविः स्थूलदन्तो बन्धनयुत् रौद्रास्यः चतुष्पदोऽय१। द्वितीयः स्त्री श्यामा सालङ्कारा लोहाभरणभूषितकर्णी २ । तृतीयो नरः किन्नराङ्गरूपी कवची धनुष्मान् सकलशः स्कन्धे रत्नचित्रित कुम्भं वहति ३ । १० । कुम्भे आद्यो नरश्चर्मवरूरास्यः सकलशः खगोऽर्ध १ । द्वितीयः स्त्री मलिनाम्बरा शीर्षे भाण्डवाहिनी अग्निना दग्धे शकटे लोहानि गृह्णाति २ । तृतीयो नरः सिंहरूपश्च श्यामः सरोमकर्णः किरीटी त्वक्पत्रनिर्यासफलभृत् ३ । ११ । मीने आद्यो नरः स्रग्भोजिकर्दंसपाणिः साभरणो नौस्थोऽब्धि तरति १ । द्वितीयः स्त्री गौराङ्गी नौस्थाऽब्धितः कूलं याति २ । तृतीयो नरो नग्नो गर्तस्थोऽग्निभ्यां व्याकुलितः सर्पावृताङ्गो गर्ताश्लिक्तवः अथ व्या कुलत्रेष्काणः ३ । इति १२ । यथा चिन्तानप्रश्नेप्रश्ने प्रयोजनं "द्रेष्काणैस्तत्करा: स्मृता" इति । रोगिप्रश्ने "गृध्रकोलेरगसर्पशैलरिवैः रोगिणो मृतिरिति" । बन्धमोक्षप्रश्ने "भुजगो भवेत् सर्पश्च पापाख्यो बन्धः" इत्यादि । यात्रायां तु यथोपयोगस्तथोक्तमेव । शुभनाथ इति द्रेष्काणेशाः प्रागुक्त एव । शुभेक्षित इति यो द्रेष्काणो शुभेऽक्षितोऽस्ति यथामा राशियोगाङ्कफलितानां यत्र तत्र स्थितो यदि शुभग्रहैरेव तदा स द्रेष्काणः शुभैर्दृष्ट इत्युच्यते । यथा स्थापना—



अत्र द्वे द्वितीयस्य कन्याद्रेष्काणस्य स्वामी बुधः सौम्यस्तस्य मीनमूर्तिस्थयोः शुक्रजीवयोश्च पूर्णा दृष्टिः, एवं पापस्वामिकत्वं पापदृष्टत्वं च भाव्यं । एवं वक्ष्यमाणे एव यास्यशुक्रप्याद्यो नवांशादीनामपि सौम्यक्रूरदृष्टत्वं च भाव्यम् ॥

**मन्यर्केन्दुकुजौस्त्यक्त्वा शुभोऽन्येषा नवांशक ।**
**लग्नवद्द्वादशांशस्तु त्रिंशांशस्तु नवांशवत् ॥ ३७ ॥**

व्याख्या त्यक्त्वेति, यदुक्तं दैवज्ञवल्लभे—

"कमठकस्य नवमि वाहनभयः कुजस्य वह्निभयम् ।
इन्दोः भयापहाभि' समेर्नवांशे मरणमेव ॥ १ ॥"

लग्नवदिति "यावन्नं विशूले लग्ने (२६)" इत्यत आरभ्य "यत्र यदयं स्वलग्नेन्दोः (३३)" इति यावत्प्रतिपद यदुक्तं तत्सर्वं द्वादशांशेऽपि बोध्यं । नवांशवदिति भयमर्थः-शनिकुजवर्जितो त्रिंशांशः शुभः अर्केन्दोस्त्रिंशांशाभावात् ॥

उक्ता ग्रहगुणितिः । अथ यात्रायां द्वादश भावानाह—

तनु १कोशो२भटो३यानं४मंत्रो५ऽरि६वर्त्म७जीवितम्८ ।
मन ९कर्मा१०ऽऽया११व्ययाः१२भावाः स्युरुदयादय ॥३८॥

व्याख्या–कर्मेति मार्गं व्यापारो वा । एषु स्थानेष्वेषां शुभाशुभत्वं ग्रहवशाद्विचार्यत्वे ॥
इह च पूर्वोक्त भावविचारणा अनुसमेव । विशेषस्तु यात्रायां द्वादशभावेषु ग्रहविचारमाह—

हन्ति योधायकर्मान्यानसौम्यः कर्म चासित ।
सौम्योऽप्यरिं सितोऽस्तान चन्द्रश्च तनुजीविते ॥ ३९ ॥

व्याख्या–असौम्य क्रूरो ग्रहस्त्रिरसैकादशवर्जान् सर्वान् भावान् हन्ति त्रिषष्ठैकादशस्थास्तु पुष्णातीत्यर्थः । किं सर्वोऽपि क्रूर एव ? नेत्याह–कर्म चासित इति असितः शनिर्दशमभावमपि हन्ति, शेषांश्च सर्वान्, केवलं त्र्येकादशस्थानेष्वेव शनिः पुष्णातीति भावः । सौम्योऽप्यरिमिति सौम्योऽपि गुरुशुक्रबुधेन्दुरूपो ग्रहोऽरिं षष्ठभावं हन्ति "सौम्याः षष्ठेऽरिघ्नाः" इत्युक्तेः, शेषभावांस्तु पुष्णात्येव क्रूरग्रहस्तु षष्ठभावं हन्त्येव क्रूरत्वात्षष्ठेऽस्य पोषणम् । ननु किं सर्वोऽपि सौम्योऽरिवर्जमन्यान् भावान् पुष्णात्येव ? नेत्याह–सितोऽस्तानमिति सितः शुक्रोऽस्तानं सप्तमभावमपि हन्ति, चन्द्रश्च प्रथमाष्टमभावावपि हन्ति शुक्रेन्दू षष्ठभावं विनाशयत इति तूक्तमेव । एवं चायमर्थः संपन्नः—

'ख१०स्वायमित्रधर्मसुखपञ्चगाः क्रूराः सर्वेऽपि शुभाः सौम्याः ।
रिपावस्ते७सितमदन८लग्न१गचन्द्रश्च यात्रायाम् ॥१॥'

इति कृता यात्राकुण्डलिकायां सामान्यतः द्वादशभावविचारणा ॥

अथ मूर्तिस्थग्रहस्य फलमाह—

जन्मन्यमित्रः सौम्योऽपि न लग्नस्थ शुभो ग्रह ।
तत्रेष्टस्तु पापोऽपि यात्रालग्नस्थित शुभः ॥४०॥

व्याख्या–सौम्योऽपि यो जन्मसमय दुःस्थानस्थभवनस्थत्वादिना अशुभः स यात्राक्षणे मूर्तौ न शुभः । तत्रेष्ट इति यस्तु क्रूरोऽपि रिपु६लाभ११स्थत्वादिना जन्मनीष्टः स यात्राक्षणे मूर्तौ शुभ एव जन्मशुभाशुभत्वस्य विचारणो जातकाद्येषाः । समासेन स्वेषम्—

क्रूराश्रितशुभस्थाः सितेन्दुगुरवोऽन्तिमारिपुवर्गाः ।
व्ययान्तिमरिपुवर्गो बुधः प्रशस्तो जन्मसमये ॥१॥'

स्थापना—

| जन्मकुण्डलिकायां शुभाः । | |
|---|---|
| रवि | ३–६–११ |
| चन्द्र | १–२–३–४–५–७– –१०–११ |
| मंगल | ३–६–११ |
| बुध | १–२–३–४ ७–९–१०–११ |
| गुरु | १–२–३–४–५–७–९–१०–११ |
| शुक्र | १–२–३–४–५–७–९–१०–११ |
| शनि | ३–६–११ |
| राहु | ३–६–११ |

पापोऽप्यमीदृशो जन्मलग्नर्क्षस्वामिनोः सुहृत् ।
मूर्तिस्थित शुभोऽपि स्यादशुभोऽरातिरेतयो ॥४१॥

व्याख्या—जन्मलग्नर्क्षेति जन्मलग्नजन्मराश्यधिपयोर्यो मित्रम् ॥

सुहृद्दशापते सद्य सफलो जनने बली ।
क्रूरोऽपि विविधो भग्रस्तनौ सौम्योऽपि नेतर ॥४२॥

व्याख्या—यात्राकाले यस्य ग्रहस्य दशाऽस्ति स दशापतिस्तस्य सुहृन्मित्रम् । विशेषस्तु—दशाप तिरपि यात्रासमये सबला विलोक्यते । यतः —

"यात्रा नैव दशापतावुपहते नैवास्तगे नाबले, —
नीचस्थे न च नैव वक्रिणि नृणां देया कदाचिद्बुधैः ।" इति

दशाक्रमतत्प्रमाणतद्विभागादिस्वरूपं च जातकादिभ्यो ज्ञेयं, इह ग्रन्थस्तु तादृशविस्तरस्या न प्रतन्यते, स्वल्पबुद्ध्यर्थं तु वार्षिक दिनदशाप्रमाणं स्थूलं दर्श्यते, तथाहि—

"मित्रनामराशितः प्रभृति गण्यते वर्तमानधिष्ण्यान्तैः ।
गतदिवसाद्यैर्वै दिनदशाः स्युः क्रमादेताः ॥१॥

रवी१न्दु२भौम३बु४शनी५ज्य६राहु७सकेतु८ शुक्रेषु९ मताः२० लवाणाः५० ।
जलाब्धि२८पट्बाण५६ रसाभि३६देव३३देवा११विशीत्य२४ मह्या७० दशाद्य ॥२॥'

सर्वे दिनाः षष्ट्यधिका त्रिशती३६० ।

शनि१ धन२ऋणे३ लक्ष्मी४ दैन्य५भ्रमी६भ जन्मसम७ ।
मये८ निर्व९ चाफलार्थीनां दशादिनदशा क्रमात् ॥३॥

अत्रायमाम्नायः—स्वनामराशौ यद्दिनेऽर्कः संक्रान्तस्तद्दिनादारभ्य वर्तमानदिनं यावद्दिना गण्यन्ते इयन्तो दिना गता इति तदा ता विंशतिर्दिना रवेर्दिनदशाः अग्रे पञ्चाशद्दिना इन्दोरित्यादि, एवं गणने यस्य ग्रहस्य दिनदशा तदानीं समेति स दशापतिरिति । सद्यः सफल इति यस्तदानीं गोचरेण प्रतिकूलवेधेन वा शुभः स सद्यः सफलः यस्तु गोचरेणानुकूलवेधेन वाऽशुभः स सद्यो ऽफलः । तथा जन्मपत्रिकायां यो बली स्वक्षेत्रोच्चादिबलाधिकारादिशालिमत्स्यर्कीयोऽयं गतो च सर्वोऽस्तु शुभ इत्यर्थः । इतर इति यो वर्तमानदशोपस्वामी यो वा तदानीमफलः यो वा जन्मकाले निर्बल इति । ननु यदि जनने बलीत्युक्तं तदा जन्मनि सर्वोत्कृष्टबलोऽपि यो मृत्युस्थानादिनाऽनिष्ट स्थानस्थस्तस्यापि मूर्तौ मारकत्वप्रसङ्गः । नैव, "जन्मन्यनिष्टः सौम्योऽपि" इत्यनेनैव तस्य निषेधभणनात् ॥

जन्मकाले मिथोर्यद्वाऽन्योऽन्येनोपचयस्थिता ।
तानाख्याः सौम्यसत्क्रूरा जातकोक्ताश्च कारका ॥४३॥

व्याख्या—जन्मपत्रिकायां चन्द्राधिपद्दृष्टीक्षणस्थानं ग्रहाणां चन्द्रापेक्षया तामसंज्ञा । तथा जन्मन्येव येऽन्योऽन्यस्मादुपचयस्थास्तेषामन्योऽन्यं तामसंज्ञा । कोऽर्थः ? पितृपुत्रगुरुशिष्यादि वचानसम्बन्धस्य संबन्धिसम्बन्धेन द्विस्थानस्थैकग्रहस्य क्षेत्रस्थानसंज्ञया स्वपक्षहितमन्ये अन्योऽन्यस्य

व्याख्या–अर्केन्द्वोर्वक्रासम्भवात्भौमाद्यन्यतमो यो ग्रहस्तदानीं वक्रगोऽस्ति स एकोऽपि यात्रा-लग्ने केन्द्रस्थो सर्वं हन्ति, किं पुनर्द्वित्राः ? अथेति तस्यैव वक्रिणो ग्रहस्य वर्गो होराया अर्धमथवा द्रेष्काणनवांशादिरूपश्चेल्लग्नेऽस्ति तदा सोऽप्यशुभः । वक्रमार्गदिनसंख्या चैव ज्योतिषसारे—

"पणसट्ठि६५ इक्कवीसा२१ बारस अहियं सयं च११२ बावन्ना५२ ।
चउवीस सयं च १२४ कमा वक्कदिणा मंगलाईणं ॥ १ ॥
सग सय पणास७४५ बिसय६९२ चुआलसय१४४ पंचसयचउव्वीसा५२४ ।
दो य सया चालीसा२४० मगलमाईण मग्गदिणा ॥ २ ॥"

गत्यादि गत्याद्यैर्विकृतोऽपि ग्रहो यात्राक्रमे मूर्तौ न शुभः, अतिचरितो ग्रहो गतिविकृतः । अतिचारस्वरूपं चैवमुक्तम्—

"पक्ष१ दशाहं२ त्रिपक्षी३ दशाहं४ मासषट्त्रयी५ ।
अतिचारः कुजादीनामेष चारस्थितोऽपर ॥ १ ॥"

प्रमाणेति पूर्वप्रमाणात् ह्रस्वो महान् वा खे दृश्यमानः प्रमाणविकृतः, एवं वर्णविकृतोऽपि मान्यः । उक्तस्त्वाह–"यस्य ग्रहस्य जन्मर्क्षं क्रूरग्रहोत्पाताद्यैः पीडितं स्यात्सोऽपि ग्रहो यात्राक्रमे मूर्तौ न शुभ ग्रहजन्मर्क्षाणि चैव—

"विशाखा१ कृत्तिका२ स्वाति३ श्रवणो४ भाग्य५मित्रभम्६ ।
रेवती७याम्य८ मश्लेषा९ जन्मर्क्षाण्यर्कतः क्रमात् ॥ १ ॥"

उत्तरान्तश्चरो भानो शुभो नान्यस्तनौ भव ।
फलेन वर्गो भारम्भ तनुगव्योमगोपमः ॥ ४६ ॥

व्याख्या–देशेऽपि यत्रार्कोदयास्ते स्यातां तत्स्थानं सम्यङ्निर्णीय चिह्नयितव्यं, यत्र च विष-विषमहस्योदयास्ते स्यातां तदपि । एवं च योऽर्कोऽयुदीच्यामुदेत्यस्तमेति च स उत्तरचरः । पश्चात्केन्द्रान एवोदेत्यस्तमेति च सोऽन्तश्चरः । एतौ यात्राक्रमे मूर्तौ शुभौ । अन्य इति अर्कोऽन्यत्र चरस्त्वशुभः । इदं च मूर्तिग्रहस्वरूपमिह यद्यपि यात्राशुद्धिप्रोक्तं तथापि विवाहादिसर्वकार्यक्रमेऽपि योज्यं । विशेषस्तु—

"क्षमेऽर्कार्यौ भ्रमेपाम्नि शुभावन्यत्र मध्यमौ ।
शीतांशुलग्नगमाप्तः सर्वकार्येषु नाशदः ॥१॥
जीवशुक्रशनिस्थाने स्थितो लग्ने अयार्थदः ।
स्थानेष्वर्केन्दुभौमानां शशिसूनुरनर्थदः ॥२॥
मन्दारबुधसूर्याणां स्थानेषु शुभदो गुरुः ।
शुक्रेन्दुस्थानगो लग्ने धनयोषविनाशकः ॥३॥
सौम्यस्थाने स्थितः शुक्रो लग्नस्थोऽन्यत्र भेददः ।
छायापुत्रो रविस्थाने प्रीतिदोऽन्यत्र नाशदः ॥४॥
स्वस्थाने न शुभो मन्दो लग्नेऽन्यत्र शुभावहः ।

"स्व१मित्र२नीचगो३वक्रः४ स्वराशमस्था४रिवर्गगः५ ।
क्षमावृद्यस्थमा६ मह७ क्रूरैर्युक्तो८ऽस्य वीक्षित९ ः॥१॥
वाम्यो१०राहास्य११पुच्छस्थो१२भाके१३वृद्धो१४ऽस्तगो१५निव१६ ।
मुषुषिके१७ मूसरिफे पापे१८रश्मिगो ग्रहः ॥२॥"

अत्र नीचग इति नीचगृहस्थो नीचांशस्थोऽपि च मध्यः । वक्र इति वक्राभिमुखोऽपि वक्रग्रह। स्वराशमस्थेति स्वगृहराशेः सप्तमराशिस्थः । अरिवर्गगः शत्रोर्वर्गस्थोर्वा ग्रहस्य गृहरोपादिषड्वर्गः। वाम्यः कर्णादिद्वादशपरक्षिणावर्तनवर्ती । राहास्यपुच्छेति ।

"यत्र ऋक्षे स्थितो राहुर्वदने तद्विनिर्दिशेत् ।
मुखात्सप्तमगे ऋक्षे तस्य पुच्छं व्यवस्थितम् ॥१॥"

भाजः स्वस्पदिनोदित । युद्धोऽस्ताभिमुखः । अनेन भस्मस्वगृहविषयो निर्दिष्टेऽप्यंशवादि च गृहीतं । अस्तग' रविरश्मिषु प्रवेशादस्तमितः । जितो यो ग्रहयुद्धे दक्षिणगामी, शुक्रस्तूत्तरगामी सन् जितः स्यादिति वराहः । मुषुषिके इत्यादि शीघ्रो ग्रहो मन्दगतिग्रहस्यैकांशे यदा स्थितोऽप्यपि पञ्चात्स्थो वा तदा मुषुषिक इतित्थाऽपराख्यो योग । यदा तु शीघ्रो ग्रहो मन्दगतिग्रहस्यैकांशे स्थित्वा तदंशमतिक्रम्याग्रतो याति तदा मूसरिफयोगो यावदन्त्यांशमतिक्रम्य न याति तावन्मुषुषिकः, यदा तु चतुर्थांशे गतस्तदा मूसरिफस्तावद्यावद्राश्यन्ते यातीति, एतौ च योगौ शीघ्रो ग्रहो यदि क्रूर आगत्य कुरुते तदा मन्दगतिग्रहो निर्बलः स्यादिति । ग्रहप्रकाशे तु नवैव निर्बलस्य सूर्यं यथाहि—

'पापः नीच१ शुभो वक्री२ वाजो३ युद्धा४ऽरिमा५स्तगः ६ ।
नीचः७ पापान्तरे८ऽस्तस्व९ इत्युक्तो नवधाऽबलः ॥ १ ॥"

एवमन्यत्रापि यथासंभवं दौर्बल्यं मार्ग्यं । अभिषेचयत इति सेनयाऽभिमुखस्य प्रस्थानार्थंरिपोविजयाय गच्छत ॥

दिगीशः केन्द्रगः श्रेयान् दिग्बली मालगस्तु न ।
बलिनौ जन्मलग्नेशौ केन्द्रोपचयगौ शुभौ ॥४८॥

अथाऽऽह—केन्द्रग इति 'यदा सुरेज्यो' इत्यादिनोक्तो यातव्यदिक्पतिग्रहो यस्तस्याः यात्रालग्ने यत्र कुत्रापि केन्द्रे स्थितः शुभः, परं दिग्बलीति यातव्यदिगीशो ग्रहो लग्ने दिग्बली न श्रेयान् महान्तं दिग्बलिस्थत्वमवनप्रकारस्तु लग्नपुत्रसुखकेन्द्रेत्यादिना प्रागुक्त एव । तथा भालगस्विति यातव्यदिगीशो ग्रहो लग्ने तदेकस्थत्वेन यात्रा समुत्पन्नो न शुभ' । उक्तं च दैवज्ञवल्लभे—

"दिगीशो ललाटस्थो यदि वा दिग्बलान्वितः ।
यत्नभ्रमदो यातुः केन्द्रगस्तु जयार्थदः ॥१॥"

ललाटस्थभवनप्रकारस्त्वयं पूर्वोक्ते—

'लग्ने१ भानुर्व्यय१२भव११गतः शुक्र भागे मम १०स्था,
राहुर्धर्मे९ष्टम८सूरगता सप्तमस्थोऽर्कपुत्रः ।

मीहारांघू स्पृ१तमय५गो बन्धु७गः सोमपुत्रा,
श्रीवसिद्धिस्थित इति समाटस्थिताः पूर्वतः स्युः ॥१॥"

स्थापना—यात्रारम्भे कालटहमहचक्रम्— (समीपस्थ पत्रे विलोक्या)

कालाहचक्रं चैवम्—

"प्रयाणिमर्म१ व्याधि२भंगभयो३ बन्धर्न४मृति५र्व्याधिः६ ।
हारि७ सैन्यविमर्दो८ माव्यादिगविपत्कं क्रमशः ॥१॥"

विशेषस्तु केतुवरित' सन् यातम्यविरूर्तमुखनताम्रे यात्रायां शुभः। तथा वपचयक्रस्य महस्य दिश गच्छेन् न लपचयक्रस्येति लक्षः। बलिनौ जन्मलग्नेशाविति जन्मेशलग्नेशयोर्मध्यस्वरस१ गाव२गारिमातिकृत्य२गतिप्रमाणवर्णहृत्य३ सूर्यतो दक्षिणवारिस्व४मातुवक्तवावपविमकुर्वत्वाना५ ममावेन पञ्चिबलसपमलबिविसरिपुरागीमां भावेन च बलिष्ठत्व मावनीयं। केन्द्रेति सामान्योक्तावपि सप्तमवर्जे एव केन्द्रे प्रवेशः शुभ इति ज्ञेय। विशेषस्तु—"क्रूरावपि जन्मलग्नात् सौम्यवदेव म्यवह ठग्गौ सर्वकार्येषु सवलत्वनिबालेनेति ज्ञेयः॥

उक्ता केन्द्रादिषु महस्थवस्था। अथ यात्रायाः कुशिभिवार्या चैत्रैः श्रीदसेपांनावां गतस्य च उपायो कथयः स्वावित्याह—

सितेज्या१विन्दु२रार्किक्षतमोऽन्यया ३ सूर्यमङ्गलौ४ ।
सामाविसावकाः केन्द्रोपचयेपु वलोत्कटाः ॥ ४९ ॥

व्याख्या—राज्ञां साम१दाम२भेद३दण्ड४श्चत्वार उपायाः। तत्र यात्राक्षण यदि शुक्र-गुरू बलिनौ केन्द्रोपचयस्थौ स्यातां तदा सामाप्रावेन जयः स्यात् सन्धिविधिनेत्यर्थः। अत्र यथा सन्धिः कृतो निश्चलः स्यात्तथोच्यते—

"मास्मे मैत्रे धीतरश्मौ सपुष्ये, द्वादश्यां वा शुक्रवारे च कर्म ।
षष्ठ्यां वा तैतिलाख्ये करिला पूर्वापार्यैरत्र सन्धानसिद्धिः ॥ १ ॥"

इति एतस्माकार्या। एवं इन्दौ तथाख्ये दानेनेत्यादि। अत्रव केतुः। विशेषस्तु—एतां कर्मेषु नरसिंषु वा मारकोरास्वपि च क्रमात्पबोक्तैरुपायैः सर्वकार्येषु सिद्धिः स्यात् ॥

अथ यात्रासमहचक्रेन रिपुतः प्रथम पश्चाद्वाऽभिषेचनं क्रियमाणं सफलं स्यात्तदाह—

पौरा ग्लौसमन्दाः स्युरपरे यायिनो मताः ।
सफला यायिभिर्यात्रा वलिभिः स्थितिरन्यथा ॥५०॥

व्याख्या—पौरा इति स्थापित इत्यर्थः। यायिनां सबलत्वे सति रिपुतः प्रथममभिषेचनं सफलं। अन्यथेति पौराणां तु सबलत्वे स्वस्थानस्थितिरेव सफला। कोऽर्थः? तथा सति रिपुतः प्रथममात्मना यात्रा न कार्या। विशेषस्तु—पौराणां यायिनां च मिश्राणां सबलत्वे द्वैधीभावं कुर्यात्। कोऽर्थः? सैन्यार्धेन स्थितिं सैन्यार्धेन यात्रां च कुर्यात्। तथा सौम्येषु बलिषु सन्धिः कार्यः क्रूरेषु बलिषु विग्रहो ज्ञयः, सर्वैरप्यबलैरेवं समाश्रय पृष्ठमाश्रयेदिति योगयात्रायाम्। इत्युक्तं सप्तपञ्च पञ्चविंशत्या श्लोकैर्यात्राकर्मस्वबलिकायत्वलं। इदं च सामान्येन राजादीनधिकृत्य ज्ञेय, यतो राजानोऽपि बल्पमात्रयोगमात्रे केवलमपचयेनापि यात्रां कुर्युः। यतः—

व्याख्या—उत्कटा इति यात्रायत्रस्था मपि बलिन इत्यर्थः। चन्द्रे आपोक्लिमस्थे निर्बले च सति॥

भ्रिये विधुः सुखेऽस्ते तु७ सितज्ञौ(७)व्यस्ययेन वा (८)।
योने त्रिकोणकेन्द्रस्थाः सौम्याः पद् आयगाः परे (९) ॥५५॥

व्याख्या—सितज्ञौ सुखे चन्द्रोऽस्ते इति व्यस्ययः। याने इति यात्रायां भ्रिये स्युरिति योगः। परे क्रूराः॥

जयाय मूर्तौ१ मार्त्तण्ड सौम्य स्वे२ सप्तमो विधु (१०)।
बृहस्पतिर्वा केन्द्रस्थ शेषेषु स्वा१य११ वर्तिषु(११) ॥५६॥

व्याख्या—स्व द्वितीयं। शेषेषु क्रूरसौम्येषु सर्वेषु। पद्य याणा एकादश॥

यातु प्राग्दक्षिणयोर्ज्ञसितान्तर्जयकरः सुखे चेन्दु (१२)।
गुरुरेकान्तर आर्के(१३) ज्ञौ वा शुक्राद्य(१४) भौमाद्वा(१५) ॥५७॥

व्याख्या—म च्चां दक्षिणस्यां वा चेद्यात्रा तदा बुधशुक्रयोर्मध्येऽन्तरस्थे विधुश्चिन्दुः शुभः। परं मपि सुप्त दुर्बलस्थाने स्वाचरैव शुभः, नान्यथा। प्रतीच्युदीच्योस्तु यात्रायामव योगो नापे स्यः। तथा गुरुरेकान्तर इति ध्वनितो गुरुरेकान्तरगृहे स्थित इत्येको योगः। ज्ञौ वति शुक्राद्बुध एकान्तरगृहे स्थित इति द्वितीयः। भौमाद्बुध एकान्तरगृहे स्थित इति तृतीयः। दैवज्ञवल्लभेऽप्युक्तम्—

"भृगुजादथवा महीसुताद्बुध एकान्तरभे स्थितो यदा।
रविजादथवा गुरुस्तथा, भवतो मान्तरगा जयं रणे॥ १॥"

तदेवमत्र आर्के योगास्त्रयः।

गुरुर्जयाय लग्न१स्थः क्रूरैर्लाभ११नभो१०गतै (१६)।
तथा चन्द्रेऽष्टमे षष्ठे शुक्रे लग्नगतो गुरुः(१७) ॥ ५८॥

व्याख्या—एते सर्वे प्रस्तुतयोगाः सप्तदश॥

अथ यागपिण्डमाह—

सिद्ध्यै धी५धर्म९केन्द्रेषु बुधवाक्पतिभार्गवे।
योगो१ऽभियोगो२ योगाभियोग३श्चैक१द्विक२त्रिके३ ॥५९॥

व्याख्या—बुधगुरुशुक्राणामन्यतम एकश्चेत् धीधर्मकेन्द्राणामन्यतमस्थानस्थः स्यात्तदा योगः१। द्वौ चेत्तथा तदाऽभियोग २। त्रयोऽपि चेत्तथा तदा योगाभियोगः३। तथा चाम्येन दैवज्ञवल्लभे—

"योगेन यो याति नृपोऽरिदेशं, सुखेन सोऽभ्येति रिपूनमात्वा।
प्रमाति कीर्तिं विजयं धनं च२, योगाभियोगेन महीमशेषाम्३॥१॥"

अत्रालाप।—अयपरो यात्रायोगो लभ्यते वा न लभ्यते वा परम्परयाऽपि यात्रा तदैव कार्या। यदि बुधगुरुशुक्राणामन्यतम एकोऽपि धीधर्मकेन्द्राणामन्यतमे स्थाने स्थितो स्यात् द्विप्रमृतीनां तु किमुच्यते?। इद च स्थूरूपया वागप्रबन्धः सूक्ष्मेक्षिकायां तु द्विचत्वारिंशद्गुणिका त्रिशती ३४२ योगप्रमाणम्

यते । कथमिति चेदुच्यते—एकैकयोगा अष्टादश । कथं ? श्रीधर्मकेन्द्रेष्वाद्यम् षट् स्थानानि सन्ति यथाहि ५-९-१-४-७-१० । एषु षट्सु प्रत्येकं बुध एवैकः स्थित इति लभ्या बुधेन षड्भङ्गाः । एवं गुरुशुक्राभ्यामपि प्रत्येकं षट् षट् एवमष्टादश १८ ।

अथ द्विकयोगा अष्टोत्तरं शतं । कथं ? बुधगुरुशुक्राणां ग्रहाणां यावन्तीपि द्विकानि स्युः । यथाहि—बुधगुरू १ बुधशुक्रौ २ गुरुशुक्रौ ३ चेति । तत्र बुधगुरू समुदितौ प्रत्येकं षट्स्थानेषु स्थिताविति लभ्या एकेन द्विकेन षड् भङ्गाः । एवं शेषद्विकाभ्यामपि षट् षड् लभ्यन्ते, एवमष्टादश १८ । एते समस्तद्विकयोगाः । । अथ व्यस्तद्विकयोगाः, यथाहि—धियां बुधं धर्मे च गुरुं न्यस्य, गुरुः पुनः पुनरुत्थाप्य षष्ठं पदं यावन्नीयते, अनेनाक्षसञ्चारिकाक्रमकरणेन लभ्या पञ्च भङ्गाः । पुनर्धर्मे बुधं प्रथमे गुरुं च न्यस्य पुनः पुनर्गुरुरुत्थाप्य पुरः पुरो नीयते, एवं लभ्याश्चत्वारः ४ । एवमेव पुनस्त्रयः ३ । पुनर्द्वौ २ । पुनरेक १ श्चेति मीलने सर्वे पञ्चदश १५ । एते बुधगुर्वोः क्रमस्थापनया लभ्या' । यदा त्वेतौ विपर्ययेण स्थाप्येते, कथं ? धियां गुरुर्धर्मे बुधः इति न्यस्य बुधः पुनः पुनरुत्थाप्य पुरः पुरो नीयते, एवं लभ्यन्ते पञ्च । पुनर्धर्मे गुरुं प्रथमे बुधं च न्यस्य बुधस्य पुनः पुनरुत्थापनया लभ्यन्ते चत्वारः । तथैव पुनस्त्रयः, पुनर्द्वौ, पुनरेकश्चेति मीलने एतेऽपि पञ्चदश । उभयोः पञ्चदशकयोर्योजने त्रिंशत् ३० । एते प्रथमद्विकेन क्रमोत्क्रमस्थापनाभ्यां लब्धाः । एवमेव द्वितीयद्विकेऽपि क्रमोत्क्रमाभ्यां त्रिंशत् ३० । तृतीयद्विकेऽपि तथैव त्रिंशत् ३० । त्रिसृणां त्रिंशतां योगे नवतिः ९० । पाश्चात्याष्टादशयोजनेऽष्टोत्तरशतं द्विकयोगाः १०८ । अथ त्रिकयोगा षोडशाधिका द्विशती २१६ । कथं ? त्रयाणां त्रिकयोगस्यापेक्ष एव । तदा बुधगुरुशुक्राणां त्रिकं समुदितमेव षट्सु स्थानेषु तिष्ठतीति जाताः षड्भङ्गाः । अथ धियां बुधं धर्मे गुरुशुक्रौ च न्यस्य समुदितावेव तौ पुनः पुनरुत्थाप्य पुरः पुरो नीयेते, एवं लभ्या पञ्च । धर्मे बुधं प्रथमे गुरुशुक्रौ च न्यस्य प्राग्वत् तद्युग्मस्य पुनः पुनरुत्थापनया लभ्यन्ते चत्वारः, तथैव पुनस्त्रयः पुनर्द्वौ, पुनरेकश्चेति मीलने सर्वे पञ्चदश १५ । एते बुधस्य धुरि स्थापने लभ्याः । यदा तु गुरुर्धुरि स्थाप्यते तदा वामे तथाप्यनेनैव करणेन पञ्चदश लभ्यन्ते । यदा च शुक्रो धुरि स्थाप्यते शेषौ वामे तदापि तथैव पञ्चदश । पञ्चदशकत्रयमीलने पञ्चचत्वारिंशत् ४५ । अथ धियां समुदितौ बुधगुरू धर्मे शुक्रं च न्यस्य शुक्रस्य पुनः पुनरुत्थाप्य पुरः पुरश्चालने लभ्याः पञ्च । ततो धर्मे समुदितौ बुधगुरू प्रथमे शुक्रं न्यस्य शुक्रस्य पुनः पुनरुत्थापनेन लभ्यन्ते चत्वारः, तथैव पुनस्त्रयः पुनर्द्वौ, पुनरेकश्चेति मीलने सर्वे पञ्चदश । एते बुधगुरुयुग्मस्य धुरि स्थापने लभ्याः । यदा तु बुधशुक्रयुग्मं धुरि स्थाप्यते गुरुर्वामे तदाप्यनेनैव करणेन पञ्चदश लभ्यन्ते । यदा च गुरुशुक्रयुग्मं धुरि स्थाप्यते बुधो वामे तदापि तथैव । पञ्चदशकत्रयमीलने च पुनरपि पञ्चचत्वारिंशत् ४५ । पञ्चचत्वारिंशतोर्द्वयस्य मीलने नवतिः ९० । अथ धियां बुधं धर्मे गुरुं प्रथमे शुक्रं च न्यस्य शुक्रः पुनः पुनरुत्थाप्यते तदा चत्वारो लभ्यन्ते, यदा च गुरुरुत्थाप्य प्रथमे नीयते शुक्रश्च चतुर्थे तदापि शुक्रस्य पुनः पुनरुत्थापने त्रयो लभ्यन्ते । एवं गुरोः पुरः पुरश्चारणेन शुक्रस्य पुनः पुनरुत्थापनया च पुनर्द्वौ २ । पुनस्तथैवैक १ । सर्वेऽप्येते दश १० । एवं बुधे धुरि स्थिते लभ्याः । यदा च बुधोऽप्युत्थाप्य धर्मे नीयते शेषौ वामेतरस्थानयोस्तथाप्यक्षसञ्चारिकया लभ्यन्ते षट् ६ । यदा बुधः पुन' पुनरुत्थाप्य प्रथमं नीयते शेषौ वामेतरस्थानयोस्तथाऽक्षसञ्चारणया त्रयो लभ्य

भ्यामुच्चस्थाभ्यां तयोरेव चैकैकस्मिन् लग्ने चन्द्रे कर्कस्थे द्वादश । एवं मध्यादेकस्मिन्नुच्चस्थे तस्मिन्नेव च लग्ने कर्कस्थे चन्द्रे चत्वारः, एवमपि षोडश । सर्वे द्वात्रिंशत् । तथाहि—मेषेऽर्कः कर्के जीवस्तुले शनिर्मकरे भौमः शेषा यथेच्छं, ईदृश्यां ग्रहस्थितौ मेषे लग्ने एको योगः १ कर्के द्वितीयः २, तुले तृतीयः ३, मकरे चतुर्थः ४, एवं चत्वारः । अथ त्रिभिः मेषेऽर्कः कर्के जीवस्तुले शनिः शेषा यथेच्छं, एवं मेषे लग्ने एकः १, कर्के द्वितीयः २, तुले तु तृतीयः ३ । सर्वे सप्त ७ अथ मेषेऽर्कः कर्के जीवः मकरे भौमः शेषा यथेच्छं, एवं मेषे लग्ने एकः १ कर्के द्वितीयः २, मकरे तृतीयः ३ । सर्वे दश १ । अथ मेषेऽर्कस्तुले शनिर्मकरे भौमः शेषा यथेच्छं, एवं मेषे लग्ने एकः १, तुले द्वितीयः २, मकरे तृतीयः ३, एवं त्रयोदश १३ । अथ कर्के जीवस्तुले शनिर्मकरे भौमः शेषा यथेच्छं, एवं कर्के लग्ने एकः १, तुले द्वितीयः २ मकरे तृतीयः ३, एवं सर्वे षोडश १६ । एते पूर्वार्धोक्ताः । अथ द्वाभ्यामित्युत्तरार्धे—कर्के चन्द्रः मेषेऽर्कः कर्के जीवः शेषा यथेच्छं । एवं मेषे लग्ने एकः १, कर्के द्वितीयः २ । अथ मेषेऽर्कः कर्के चन्द्रस्तुले शनिः एवं मेषलग्ने तृतीयः ३, तुले चतुर्थः ४, अथ मेषेऽर्कः कर्के चन्द्रो मकरे भौमः एवं मेषे लग्ने पञ्चमः ५, मकरे षष्ठः ६ । अथ कर्के चन्द्रजीवौ तुले शनिः एवं कर्के लग्ने सप्तमः ७, तुलेऽष्टमः ८ । अथ कर्कस्थौ जीवेन्दू मकरे भौमः । एवं कर्के लग्ने नवमः ९, मकरे दशमः १० । अथ कर्के चन्द्रस्तुले शनिर्मकरे भौमः एवं तुले लग्ने एकादशः ११, मकरे द्वादशः १२ । अथैकाभिरेषु कर्के चन्द्रे मेषलग्नस्थेऽर्के एकः १, कर्के लग्ने चन्द्रजीवौ द्वितीयः २, कर्के चन्द्रे तुलालग्ने शनौ तृतीयः ३, कर्के चन्द्रे मकरलग्नस्थे भौमे चतुर्थः ४, एते पूर्वैः सह षोडश १६ । सर्वे द्वात्रिंशत् ३२ राजयोगाः ।

अथ पञ्चशतान्यष्टाविंशत्यधिकानि राजयोगानामाह—

> “वर्गोत्तमगते लग्ने चन्द्रे वा चन्द्रवर्जितैः ।
> चतुराद्यैर्ग्रहैर्दृष्टे नृपा द्वाविंशति स्मृता ॥ २ ॥”

लग्ने वर्गोत्तमगते राशिसमाननामकनवांशस्थे इत्यर्थः । अत्र भावः—यो राशिर्लग्नेऽस्ति तस्य यो नवांशो राशिसमनामाऽस्ति स वर्गोत्तमाख्यः स एव च नवांशो लग्नेऽभिव्यक्तोऽस्ति तदा लग्न वर्गोत्तमगतमुच्यते एवं चन्द्रेऽपि वाच्यं तस्मिन् चन्द्रवर्जितैरिति चन्द्रस्य नापेक्षा, तदन्यैर्ग्रहैश्चतुर्भिः पञ्चभिः षड्भिर्वा दृष्टे प्रतिलग्न द्वाविंशतिराजयोगाः, एवं चन्द्रेऽपि वर्गोत्तमगते राशि राशिं प्रति द्वाविंशतिः । कथं ? लग्ने चतुर्भिर्दृष्टे पञ्चदश१५ भेदाः, पञ्चभिर्दृष्टे षट्६, षड्भिरेकः१ । तथाहि—लग्ने रविभौमबुधगुरुभिर्दृष्टे एको योगः१, रविभौमबुधशुक्रैर्द्वितीयः२, रविभौमबुधशनिभिस्तृतीयः३, रविभौमजीवशुक्रैश्चतुर्थः४, रविभौमजीवशनिभिः पञ्चमः५, रविभौमशुक्रशनिभिः षष्ठः६, रविबुधजीवशुक्रैः सप्तमः७, रविबुधजीवशनिभिरष्टमः८, रविबुधशुक्रशनिभिर्नवमः९, रविजीवशुक्रशनिभिर्दशमः१०, भौमबुधजीवशुक्रैरेकादशः११, भौमबुधजीवशनिभिर्द्वादशः१२ भौमबुधशुक्रशनिभिस्त्रयोदशः१३, भौमजीवशुक्रशनिभिश्चतुर्दशः१४ बुधजीवशुक्रशनिभिः पञ्चदशः १५ । अथ पञ्चानां दृष्टिः—रविभौमबुधजीवशुक्रैरेकः१, रविभौमबुधजीवशनिभिर्द्वितीयः२, रविभौमबुधशुक्रशनिभिस्तृतीयः३ रविभौमजीवशुक्रशनिभिश्चतुर्थः४ रविबुधजीवशुक्रशनिभिः पञ्चमः ५, भौमबुधजीवशुक्रशनिभिः षष्ठः६ । अथ षण्णां दृष्टिः—रविभौमबुधगुरुशुक्रशनिभिरयमेकः१ ।

सर्वेऽप्येते द्वाविंशतिः२२। एते मेषलग्ने वर्गोत्तमगत सति स्युः, एवं द्वादशलग्नेष्वपि वर्गोत्तम गतेषु मासप्रद्वाविंशत्यौघसमिर्गुणिते जाते द्वे शते चतुःपञ्चाशदधिके२६४। एवं चन्द्रस्यापि केवलाशौ वर्गोत्तमगतस्यापरस्य द्वाविंशतेर्द्वाविंशतेर्भावाद्द्वे शते चतुःपञ्चाशदधिके२६४। मीलने पञ्च शतान्य द्वाविंशानि५२८।

अथ पञ्च योगानाह—

"तमे कुंभेऽर्केऽजे मदि शशिनि तत्र तनुगे
मृगुर्द्ध्यूसिंहालिस्वैं' शशिजगुरुवर्काः नृपतयः।
यमेन्दू तुंगेऽज्ञ सवितृशशिनौ षष्ठभवने,
तुलाजेन्दुक्षत्रेः ससितकुजजीवैश्च नरपौ ॥ ३ ॥"

कुंभे शनिर्मेषेऽर्कः वृषे चन्द्रः मृगुरपि मिथुनं तत्र बुधः सिंहे जीवः वृश्चिके भौम इदृशाः महाश्रियौ तीरेव चतुर्भिरिस्तुकेः कुंभे लग्न एको योगः १, मषे द्वितीयः २, वृषे तृतीयः ३। तथा यमेन्दू इति शनीन्दू स्वोच्च कन्यस्यौ, तत्रस्य तुले शनिः, वृषे चन्द्रः षष्ठभवनं पञ्चराशिः कन्येऽस्यैताः तत्रार्केबुधौ तुले तुल, मषे भौमः, कर्के जीवः, एवं तुले लग्ने एको योगः १, वृष द्वितीयः। सर्वेऽप्येते पञ्च।

अथ श्रीनाह—

'कुज तुंगेऽर्केन्द्रोर्धनुषि यमलग्ने च नृपतिः
पतिर्भूमेर्मेषान्यः क्षितिसुतमिकन्ने सणाशिनि।
सचन्द्रे सौरेऽस्ते सुरपतिगुरौ चापधरगे,
स्वतुङ्गस्थे मानावुदयमुपयाते क्षितिपतिः ॥ ४ ॥"

मकरे भौम धनुषि सूर्येन्दू यमलग्न इति यत्र तत्र राशौ शनिर्लग्नगः इत्येको योगः १। पतिर्भूमेर्मेषाम्य इति भरिमेव याग भौम सन्दौ लग्नतोऽर्केन्द्रौ चतुःस्थे द्वितीयो योगः २। सचन्द्रे सौरेऽस्त इति मेषलग्नेऽर्क धनुषि गुरुः तुले सनीन्दू एवं तृतीयः ३।

पुनर्योगाह—

'वृषे सेन्दौ लग्ने सवितृगुरुतीक्ष्णांशुतनये',
सुहृद्गआयाथस१ स्वैर्भवति नियमान्मानवपतिः।
मृगे मन्द लग्ने सहजरिपुधर्मव्ययगतैः
शशाङ्काद्यः स्यात् पृथुगुणयशाः पुंगणपतिः ॥ ५ ॥"

वृषे लग्ने चन्द्रः सिंहेऽर्कः वृश्चिके जीवः कुंभे शनिः इत्येको योगः १। मृगे मन्दे इति मकरे लग्ने शनिः मीन चन्द्रः मिथुने भौमः कन्यायां बुधः धनुषि जीवः शुक्रार्कौ यथेष्टं इति द्वितीयः २।

पुनश्रीनाह—

"हये सेन्दौ जीवे मृगमुखगते भूमितनये,
स्वतुङ्गस्थौ लग्ने भृगुजशशिजावत्र नृपती।
सुतस्थौ वक्रार्की गुरुशशिसितावाप्यपि हिबुके

तुले कन्या लग्ने भवति हि नृपोऽन्याऽपि गुणवान् ॥ ६ ॥ "

वृषे इति चन्द्रलग्नपक्षार्थक इत्युक्तेर्धनुषि जीवेन्दू मकरे भौम एवं सति मीनलग्ने सशुक्रे एको योगः १, कन्यालग्ने सबुधे द्वितीयः २ बुधस्थापितिति कन्यालग्ने बुधः मकरे भौमशनी धनुषि चन्द्रजीवशुक्रा इति तृतीयः ३ ।

पुनश्चाह—

"वृषे सेन्दौ लग्ने धन्मृगमृगेन्द्रेषु सहिते
र्यमाराकैर्योऽमूस्त खलु मनुजः शास्ति वसुधाम् ।
मजे सौरे मूर्तौ शशिगृहगते चामरगुरौ
सुरेज्ये वा लग्ने धरणिपतिरन्योऽपि गुणवान् ॥ ७ ॥"

मीने लग्ने चन्द्र कुंभे शनिः मकरे भौमः सिंहेऽर्क इत्येको योगः १ । मन्दे सौरे इति मेषे लग्ने शौरे भौम कर्के जीव इति द्वितीयः २ । तथा कर्के लग्ने जीव मेषे भौम इति तृतीयः ३ ।

"कर्कटिणि लग्ने तत्स्थे जीवे चन्द्रसितज्ञैरायप्राप्तैः ।
मेषगतेऽर्के भवति विभाविक्रमयुक्तः पृथिवीनाथम् ॥ ८ ॥"

कर्के लग्ने जीवः वृषे चन्द्रशुक्रबुधाः मेषेऽर्कः एव योगः १ ।

' मृगमुखेऽर्कतनये तनुसंस्थे, छागकुलीरहरयोऽपियुक्ताः ।
मिथुनतौलिसहितौ बुधशुक्रौ, यदि ततः पृथुयशाः पृथिवीशः ॥ ९ ॥

मकरे लग्ने शनिः मेषे भौमः कर्के चन्द्रः सिंहेऽर्क मिथुने बुधः तुले शुक्र एव योगः १ ।

' स्वोच्चसंस्थे बुधे लग्ने भृगौ मेषूरणाभिते ।
सजीवेऽस्ते निशानाथे राजा मन्द रसार्मगे ॥ १० ॥"

कन्यालग्ने बुधः मिथुने शुक्र मीने जीवेन्दू मकरे शनिभौमौ एव योगः १ । सर्वेऽप्येते राजयोगाः पञ्च शतान्येकेनाशीत्यधिकानि ५७९ ।

अथाधमभंगे यवनाचार्याह—

'अपि सकलकुलाद्या मानवा राज्यभाजः किमुत नृपकुलोत्था मोक्तभूपालयोगैः ।
नृपतिकुलसमुत्थाः पार्थिवा वक्ष्यमाणैर्भवति नृपतिवृत्त्यन्तरन्यनृपाऽपुत्रः ॥ ११ ॥"

पूर्वोक्तराजयोगैः सामान्यकुलजा अपि नराः स्युः, नृपकुलजानां तु किं वाच्य ? वक्ष्यमाणै स्तु नृपकुलजा नृपाः स्युः, अन्यकुलजास्तु नृपतुल्याः । ते चामी—

"स्वोच्चत्रिकोणगैर्बलिष्ठैर्नृपाचैर्नृपतिवंशजा नरेन्द्राः ।
पञ्चादिभिरन्यवंशजा हीनैर्वित्तयुता न भूमिपालाः ॥ १२ ॥'

स्वोच्चस्वगृहस्वत्रिकोणगैर्बलिभिस्त्रिभिरपि भवैर्बलवद्भिर्नृपवंशजा नराः पञ्चभिः षड्भिः सप्तभि र्वाऽन्यवंशजा अपि । हीनैरिति व्यत्ययमत्र स्वोच्चादिस्थिता अपि बलहीनास्तदा प्रभुता धनिन स्युर्न तु नृपाः । अत्र त्रिचतुराशिभिः सम्बन्धैः पञ्च योगाः । तथा—

' सिंहस्थेऽर्केऽथेन्दौ लग्ने भौमे स्वोच्च कुंभे मन्दे ।
चापे भवति जीवे राज्ञः, पुत्रं विद्यात्भूमिनाथम् ॥ १३ ॥ "

"राज्याभिषेके नीवाहे सरित्कूपासु च दीक्षणे ।
धर्मार्थकामकार्ये च शुभा वारः कुजं विना ॥१०'

भौमदिना मुहूर्ते रक्तिकूपसमिवाद्य दग्धिमरोर्गारवशाः, सोमवारस्तु सपत्नीमद स्युर्वे ।
विशेषस्तु—

"कृष्णपक्षे तिथिशेषु वारधिष्ण्यादिकन्यादिषु ।
संकीर्णाशो मर्वसन्ति वारकर्म न संशयः ॥१॥"

इति वैभवलग्ने ॥

प्रतिष्ठामाह—

उद्वाहे मृगपैत्रर्क्षे प्रतिष्ठायां तु ते उभे ।
आदित्यपुष्यश्रवणधनिष्ठाभिः समं शुभे ॥९॥

व्याख्या—प्रतिष्ठायामिति मत्स्यादीनां बिम्बादेः, देवतान्तराणीनां प्रतिष्ठासु तु मास्येवं प्रत्नमाख्ययामूचिरे—

'रोहिण्युत्तरपौष्णपैष्ण्यकरादित्याभिजिद्वासवानुराधैन्दवजीवभेषु गदितं बिम्बीः प्रतिष्ठापनम् ।
पुष्यश्रुत्यधिविष्णु वैश्वकर्मयोर्विंशाधिपस्कन्दयोर्मैत्रे तिग्मकरेः करे निर्ऋतिभे दुर्गादिकानां शुभम् ॥१॥"

वैश्वकर्मयोरिति कने ब्रह्मा । तिग्मकरेः करे इति संक्षेपोऽयं, विस्तरस्त्वेवं भीमपराक्रम ग्रन्थे यथा—

"मघाविष्ण्यचतुष्केण मैत्रादित्र्युग्रपूर्वभैः ।
सपुनर्वसुभिः कुर्यात् प्रतिष्ठामुग्ररोचिषः ॥१॥"

दुर्गादिकानामिति मातृभूतयक्षगणसर्पादिमहर्म । यथा—

'गणपतियक्षयोगममूलसुराणां, यवनफणिसरस्वत्यादिकानां च पौष्णे ।
श्वसि सुगतनाम्नो वासवे क्षेत्रपानां निगदितमधिकानां स्थापनं च स्थिरेषु ॥१॥"

ब्रह्मादिकानामिति वक्ष्येत्याभिरुद्रादीनां स्थिरेषु ध्रुवेषु । यथा—

"सप्तर्षयो यत्र चरन्ति धिष्ण्ये, तत्रार्चा प्रतिष्ठा खलु तत्र तेषाम् ।
श्रीव्यासवाल्मीकिमुख्योगानां, यथा स्मृता वाक्पतिमे महान्तः ॥१॥"

तत्र सप्तर्षयो परित्स्थस्यार्थं भावः—

"आसन्मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ ।
षड्द्विकपञ्चद्वियुतः(२५२६)मितः शककालस्तस्य राज्ञश्च ॥१॥
एकैकस्मिन् धिष्ण्ये शतं शतं ते चरन्ति वर्षाणाम् ।
प्रागुत्तरतश्चैते सदोदयन्ते ससाध्वीकाः ॥२॥"

अत्र आसन्मघास्विति युधिष्ठिरराज्यसमये सप्तर्षयो मघासाममूवन् । ततु षड्विंशत्यधिक पञ्चविंशतिवर्षशतैर्गतैः शककालो जातः एकैकभे च वर्षशतमेषां स्थितिः, अतः शकादौ ते पुष्ये ऽभूवनित्यागतं । एतासुत्पन्नमवस्था चैवं—

एकं तथाऽभिमुखसंस्थितमध्यनाडीपयस्थमागश्रुतधिष्ण्यमगत्वमहेण ॥ १ ॥"

इति मत्पतिमवपर्यायः । उदाहरणं यथा—मृगशीर्षे वर्षचित्रौ वा, चित्रायां च कश्चिद्भौमादि सप्तकान्यतमो वक्री ग्रहः स्यात्तदा तस्य वक्रगतित्वेन दक्षिणा दृग्मृगशीर्षे पतिता । रेवत्यां चाश्वा दिषष्ठ्यन्यतम कश्चिदतिचारी ग्रहः स्यात्तदा तस्य शीघ्रगतित्वेन वामा दृगिह मधवतो महदन्यथा तदा मृगशीर्षे ग्रहमिश्रं स्यात् । उत्तराषाढायां च भौमादिपञ्चानां मध्ये कश्चिन्मध्यगतिर्ग्रहः स्यात् तदा सम्मुखदशा तृतीयस्थवेधोऽपि । एवमन्यत्रापि भाव्य । परमेव तृतीयो वेधो बहुनैकार्गलस्त स्मिन् श्लोकेऽपि करिष्यते, ग्रन्थान्तरात्राधिकार ॥

भङ्गुरमानां शुद्ध्युपायमाह—

धिष्ण्यं कार्याय पर्याप्तं चन्द्रभोगाद्ग्रहाहतम् ।
शुद्धं षड्भिर्भवेन्मासैरुपरागपराहतम् ॥ १६ ॥

व्याख्या—पर्याप्तमिति योग्यं भवेदिति सर्वत्र । ग्रहाहतमिति क्रूरग्रहेण विद्धमाक्रान्तभोगं तेन ग्रहेण वास्तवक्रगेन वक्रिमहाक्रान्तवत्यादिना वा दूषितं । चन्द्रभोगादिति ग्रहदृष्टदोषापगमात्तु यदि चन्द्रेण भुक्तं स्यात्तदाऽऽदरणीयमित्यर्थः । यथाह वराह —

"दोषैर्मुक्तं यदा धिष्ण्यं पश्चाच्चन्द्रेण संयुतम् ।
ततः पश्चाद्विशुद्धं स्यान्नान्यथा शुभदं भवेत् ॥ १ ॥"

तदुक्तमाह—

'तत्सूर्येन्द्वोर्भोगात्कर्मभ्यास भवति भूयोऽपि ।
धिष्ण्यं कर्मसु शुद्धं तापनिषिक्तसुवर्णमिव ॥ १ ॥"

अत्र सूर्येन्द्वोर्भोगादिति सूर्येण ताप्यते पश्चाच्चन्द्रेण निर्वाप्यते इत्यर्थः । उपरागोऽर्केन्द्वोर्ग्रहणं (तेन) यदृक्षं दूषितं ग्रहणमभिलक्ष्य, तत् षण्मासीं त्याज्यं । यावदर्केण भुक्ते तावत्त्याज्यमित्यन्ये । विशेषस्तु—

"खग्रासेन ग्रहणं स्यात्तदा तदाद्यग्रहणीपदं भम् ।
पश्चाद्विशुद्धं भवति द्वितीयग्रहणं शुध्यति मासषट्कात् ॥ १ ॥"

इति सर्वज्ञः । यत्र भे केतोरुदयः स्यात्तदेव षण्मासान् केतुरिति तदपि षण्मासीं त्याज्यं । यस्मिन् दिनभे ग्रहणमभीमौमादिपञ्चान्यतरयोर्मिथो भेदनं स्यात्तदपि भं षण्मासीं त्याज्य । उक्तं च विवाहवृन्दावने—

"यस्मिन् धिष्ण्ये वीक्षितौ राहुकेतू, भेदस्ताराखेटयोर्भेन च स्यात् ।
आषण्मासीं तत्र कुर्यान्न शुभानि, मासिष्वन्यो स्यान्नो शुभं कर्म किञ्चित् ॥ १ ॥"

यत्र दिनभेऽर्केन्द्वोर्ग्रहणं स्यात्तत्र राहुर्भीमिव इत्युच्यते, यत्र भे केतोरुदयः स्यात्तत्र केतु वीक्षितः कथ्यते । ननु क्व केतूदयभं ज्ञायते इति चेदुच्यते—

"मेषेऽर्के सति रेवत्यां यदि याति विधुन्तुदः । भाद्रमासोत्तपर्वे स्यात् पुष्ये केतूदयस्तदा ॥१॥
सूर्ये वृषाश्रितेऽश्विन्यां यदि याति विधुन्तुदः । आश्विनस्योत्तपर्वे ह्युद्रोहिण्यां केतुरीरितः ॥२॥

मानि । कियता कालेन प्राग् भूत भविष्यति चेति ज्ञातुमिच्छा चेत्स्यात्तदाऽर्केन्द्वोर्गती कलाविकलात्मिके सवर्णीकृत्य मिथः समीकृत्य विकलारूपे कार्ये । तदनु सायनार्केन्दुमीलने यत्किञ्चिदधिकषड्राशिकल्पे राश्यादिकमस्ति तस्मात्षड्राशीं त्यक्त्वा शेषस्य विकलाः कृत्वा तस्मात्तस्य विकलारूपेण गत्यन्तरेण भागो देयः, लब्धम् दिनम्, शेषं षष्ट्या सगुण्य पुनस्तेनैव भागो लब्धम् वा घट्यः, तथैव पुनर्भागे लभ्यन्ते तानि पलानि। इमान्यतीतानि द्युदिनघटीपलेभ्यः प्राक् क्रान्तिसाम्यमतीतमित्यर्थः । यदि च षड्राशितः वा किञ्चिदून तदा तत्सर्वं षड्राशिमध्यात् पातयित्वा शेषस्य विकलाः कार्याः, तस्मात्तस्य भाग द्युगतिविकलान्तरेण भागो लब्धं दिनं, पुनः भागलब्धमने भजने च लब्धं घटीपलानि, एतानि एष्याणि इष्टदिनघटीपलेभ्योऽग्रे क्रान्तिसाम्यं भविष्यतीत्यर्थः । यदि च प्रथमवारभजने भागा न प्राप्नोति तदा दिनस्थाने शून्यं क्रान्तिसाम्यात्पूर्वोत्तरदिनं गतमेष्यं वा नास्ति, किन्तु घटीपलान्येव भियन्ति सन्ति । यदि च द्वितीयवारभजनेऽपि भागो नाप्यते तदा घटीस्थानेऽपि शून्यं, कोऽर्थः ? क्रान्तिसाम्यात्पूर्वोत्तरं घट्योऽपि गता एष्या वा न सन्ति, किं तु पलान्येव कियन्ति सन्तीत्यर्थः ॥

तत्र पूर्वोदाहरणं यथा—संवत् १५१२ वर्षे वैशाखशुक्लदशम्यां १० गुरौ मघायां प्रातर्घटी१ पलानि४५ समये व्यतीपाते गते सति क्रान्तिसाम्यं विचार्यते । तथाहि—तदानीं राश्यादिकला विकलारूपः स्फुटोऽर्कः ०–१८–९ –२६, तत्र्वे आयनांशाः१५ कला १४ युता सन्ति, तथा जाते सायनोऽर्कः १–४–२४ २६ । रविगतिः स्फुटा कला ५७ विकलाः५८ । तदा च स्फुट इन्दुः ४–११–२–१० । अयनांशकलाः १५ (विकला) १४, योजने सायनेन्दुः ४–२६–३१–१० । चन्द्रगति स्फुटा कला ७५० । सायनार्केन्दुमीलने जात ६–१–०–१६ । अत्र क्रान्ति साम्यमतीत, कियता कालेनेति ज्ञातुमशा (त्र्या) भारद्वयं षष्ट्या संगुण्य विकलारूपं कृत्वा ५६ विकलाक्षेपे (च) जात ३६५६ । सूर्येन्दुगती अपि मीलयित्वा षष्ट्या ६० गुणने विकलाः कृताः, ५८ (विकला) क्षेपे जात ४८४७८ । अनेन भाजनाहृत्य ३६५६ भजने भागा न लभ्यत इत्य तो दिनस्थाने शून्य । ततः साऽङ्कः ३६५६ षष्ट्या गुणने जात २१९३६०, पश्चादेनाङ्केन ४८४७८ भागे लब्धं घटी ४ । शेषं षष्ट्या संगुण्य पुनस्तेनैव भागे लब्धं ३१ पलानि, एतत्घटी४पलैः ३१ क्रान्तिसाम्यं भागतीतम् ॥

आगामिनोदाहरणं यथा—संवत् १५१२ वर्षे कौलिकशैवारम्भाष्टम्याम्८ भौमे धनिष्ठायां घ० १८ प० ५८ समये आयनयोगसाम्यपाते क्षेपे सति क्रान्तिसाम्यं विचार्यते । तथाहि—तदानीं राश्या दिरूप स्फुटोऽर्कः १–८–४१–१३ । अयनांश (१५–१४) क्षेपे सायनोऽर्कः १–१६–१५–१३ । रविगतिः स्फुटा क०५७ वि०३० । तदा च स्फुटेन्दु ९–२९–१०–५३ सायन(१५–१४) इन्दु १ –१८–२४–५१ । चन्द्रगति स्फुटा क० ८४२ वि० ६ । सायनार्केन्दुमीलने जात ०–१–०–६ । अत्रापि क्रान्तिसाम्यमतीतं कियता कालेनेति ज्ञातुमथापि भागमन् कृतेन लब्धं घट्य४, पलानि॰ प्राक् क्रान्तिसाम्यमतीत । एवं किञ्चिन्न्यूनषड्राशौ एष्यमपि क्रान्ति साम्यस्य पूर्वोक्तयुक्त्या एष्यदिनघट्यादानेयं । महापातौ तद्गतीनां च स्फुटीकरणविधिरग्रे वक्ष्यते । इदं च स्थूलमानेन क्रान्तिसाम्यसमयानयनमेव सुखबोधार्थं। अस्माभिरपि तदनुक्तमथातदेव लिखितम्। ननु सूक्ष्मेक्षितार्थी स्यात् तथाहि—क्रान्तिसाम्यं कदा भवितुं महत्व ? कियती वेला भूत्वा कदा

"सर्वेषां तु कुयोगानां वर्जयेद्घटिकाद्वयम् ।
उत्पातमृत्युकाणानां सप्त षट् पञ्च नाडिकाः ॥१॥"

इति नारचन्द्रटिप्पनके । केचिन्मृत्युयोगे प्रहरं पञ्चस्याज्या इत्याहुः । यथा—

'यमघंटे नवाष्टौ च काणमृत्यौ विवर्जयेत् ।
दग्धे तिथौ कुवारे च नाडिकानां चतुष्टयम् ॥१॥'

इत्यप्यन्ये । यथा—

"कुतिहि कुवारकुजोगा विट्ठी वि अ जम्मरिक्ख दड्ढतिही ।
मज्झण्हदिणाओ परे सव्वं पि सुहं भवेऽवस्सं ॥१॥"

इति हर्षप्रकाशे । अन्योऽप्याह—

"विष्टावङ्गारके चैव व्यतीपाते च वैधृते ।
प्रत्यरे जन्मनक्षत्रे मध्याह्नात् परतः शुभम् ॥१॥"

अत्र प्रत्यरे इति सप्तमतारायाम् । उपलक्षणं चैतत् तृतीयपञ्चमाधानतारयोः, तेन तास्वपि मध्याह्नात् परतः शुभमेव इति सामान्येन प्रतिष्ठायां मुहूर्तोपसर्गः ॥

अथ प्रतिष्ठायां लग्नांशनियममाह—

लग्नं श्रेष्ठं प्रतिष्ठायां क्रमान्मध्यमथावरम् ।
द्व्यङ्गं स्थिरं च भूयोभिर्गुणैराढ्यं चरं तथा ॥१९॥

व्याख्या—जैनप्रतिष्ठायां द्विस्वभावलग्नं श्रेष्ठं, स्थिरं तु मध्यमं, चरं त्ववरमिति अधमम्, तथा अतिबलवद्बहुशुभग्रहान्वितं चेत् स्यात्तदा तृतीयभङ्गे ग्राह्यमपि । स्थापना यथा—

| | | | | |
|---|---|---|---|---|
| ३ | ६ | ९ | १२ | उत्तम |
| २ | ५ | ८ | ११ | मध्यम |
| १ | ४ | ७ | १ | अधम |

देवान्तरप्रतिष्ठायां तु लग्नान्येव—

"सिंहोदये दिनकरो घटभे विधाता, नारायणस्तु युवतौ मिथुने महेशः ।
देव्यो द्विमूर्तिभवनेषु निवेशनीयाः, क्षुद्राश्चरे स्थिरगृहे निखिलाश्च देवाः ॥१॥"

इति रत्नमालायाम् । अत्र क्षुद्रा इति व्यन्तराद्याः । निखिला इति सकलेशा इत्याद्याः ।
अन्यस्त्वाह—

"सौम्यैर्देवाः स्थाप्याः क्रूरैर्गन्धर्वयक्षरक्षांसि ।
गणपतिगणांश्च नियतं कुर्यात्साधारणे लग्ने ॥१॥"

अंशास्तु मिथुनं कन्या धन्वाद्यार्धं च शोभनाः ।
प्रतिष्ठायां वृषः सिंहो वणिग्मीनश्च मध्यमाः ॥२०॥

व्याख्या—धन्वाद्यार्धमिति धनुरंशस्य प्रथमार्धं तत्समस्थायिसद्धस्तरूपं । मध्यमा इति देवस्य सुप्रयत्नभवनेऽपि कर्मस्थापकानां हानिकरत्वात् । सामर्थ्याच्चेद् लभ्यते शेषा मेषकर्कवृश्चिकमकर कुम्भांशा धनुरंशान्त्यार्धं चाधमान्येव । उक्तं च नारचन्द्रटिप्पनके—

मिथुने स्थापितो देवो वर्द्धिताद्यमासदः १ ।

| | | | |
|---|---|---|---|
| बुध | २-३-६-५-१०-११ | १-४-७-९ | ८-१२ |
| गुरु | १-४-७-१० ९-५-११ | ३-६-२ | ८-१२ |
| शुक्र | १-६-९-१२ | २-५ | १-७-४-८-१० -११ |
| शनि | ३-५-६-८-११ | १ | २-४-७-९-१०-१२ |
| राहु-केतु | ३-६-११ | २-५-८-९-१० -१२ | १-४-७ |

इत्यमिह तत्त्वं—

"अहवा वि मज्झिमगहं काऊण सर्णि गुरुं च बलवंतं।
मयकं सुक्क लग्गे तो दिज्जइ दिक्ख सीसस्स ॥ १ ॥"

इति श्रीहरिभद्रसूरिवचः। एते च क्रमान्मध्यमोत्कृष्टहीनबला एवमेव स्युः, तथाहि—शनिर्हि पञ्चाष्टमनवमः पापकारकत्वान्मध्यमबलः। चन्द्रस्तु सापोक्षिमस्थलेऽपि त्रिगमसाक्षात्वान्मध्यमबलः। गुरुस्तु केन्द्रत्रिकोणेषु बलिष्ठ इति स्फुटमेव। एकादशे तु गुरोरर्थस्थानं वदयते तेन तत्रापि बलिष्ठः। शुक्रस्तु त्रिषड्दशद्वादशेष्वापोक्लिमस्थत्वाद्धीनबलः। उक्तं च त्रैलोक्यप्रकाशे—

"रूपा२०र्ध१०पाद५पौर्वा' स्यु केन्द्रादिस्था नभश्चराः"।

तेनैते उत्तममध्ये न्यस्ताः। शेषग्रहास्तु मध्यस्थाः सर्वसम्मतत्वेन रेखाप्रदानेऽप्युत्तममध्ये। येषां तु रेखाप्रदत्वं मध्यान्तरविरुद्धत्वात्ते मध्यममध्ये। चन्द्रस्तु सप्तमः प्रस्तुतगाथानुसरणार्थमेव मध्यम मध्येऽप्येति। एवमङ्गारकयोषीर्यास्त्वधममध्ये। शुक्रस्यैकादशः सूत्रे रेखाप्रदत्वेनोक्तोऽपि नारचन्द्र लग्नशुद्ध्यादिषु निषिद्धत्वादधममध्येऽप्यस्ति ॥

विवाहलग्नरेखाप्रदां ग्रहसंस्थामाह—

विवाहे सर्कार्की त्रि३रिपु६निधना८येषु११ शुभदौ,
विधु स्व२ऽपा३येषु११ क्षितितनय आय११त्रि३रिपु६ग ।
बुधेज्यौ तत्ता७ष्ट८व्यय१२विरहितायास्फुजिदरि६-
स्मरा७ष्टा८न्त्या१२न्मुक्त्वा वितनु१सुख४कामे७ष्वथ तम ॥३६॥

व्याख्या—सप्तमेऽप्यपि, यतः—

"यत्रेन्दुर्माष्टगतो न तृतीयो न द्वितीयगश्चापि।
मनुजैरपि सर्वेस्तल्लग्नं वर्जयेन्मतिमान् ॥१॥"

सप्तमेऽपि पञ्चौनकः—

"सप्तमगते बुधे सति सप्ताब्दात्मारयेत् पतिं कन्या। मासत्रयेण कन्या निधनगते पञ्चतां याति॥१॥
माङ्गल्यसौभाग्ययोर्भङ्गं पुंसां धूनगते गुरौ। भृगौ तु योषितामाह विवाहे देवलो मुनिः ॥२॥"

भाग्वन्नित शुक्रः। अरिस्मराष्टेति, यदुक्तं वैवस्वतम—

"लग्नस्थेऽपि गुरौ बुधे सद्युः षष्ठोऽष्टमः कुजः।" इति

वितन्विति पञ्चौनकः—

"लग्नस्थो यरयणं राहुर्दिशति धुने पत्नीमरणम्।" इति

" लाभा कर्मोऽम्बुपो मन्मथः " इति श्लोकोक्तमाङ्गल्यानामति तुर्यं च विना शेषेषु पञ्चमसप्तमेषु नवमदशमानामन्यतमे सौम्यक्षेत्रे शुभग्रहस्य दृष्टी रेनाममन्द् पश्येति त्रिविक्रम ॥

अथ षष्ठाष्टमद्वादशस्थानानामशुभत्वात्तत्र ग्रहस्थितिनिषेधमाह—

विवाहे नाष्टमाः श्रेष्ठा पञ्च सूर्यशनी विना ।
षष्ठौ चेन्दुसितौ तद्वत्त्येऽन्त्य इति केचन ॥३७॥

व्याख्या—सूर्यशनी त्वष्टमावपि श्रेष्ठौ, न शेषाः । षष्ठौ चेन्दुसितौ तद्वदिति चन्द्रशुक्रौ षष्ठौ न श्रेष्ठौ, शेषाः पञ्च श्रेष्ठा एव । केचित्त्वाहु'-अन्त्ये द्वादशेऽन्त्यः केतुर्न श्रेष्ठ' । एषा विलोचनमते मतसंख्या । विशेषस्तु—

"भौमे सप्तकलत्रनैधनगते शुक्रेऽरिसप्ताष्टगे, चन्द्रे रन्ध्रविलग्नषष्ठनिरते कर्मास्तगे मान्मथि ।
लग्नग्रामसुते गुरौ निधनगे सौम्येऽष्टजामित्रगे, जायाम्भोनिधिविक्रमभाजि तमसि माहुर्न पाणिग्रहम् ॥१॥"

एतेऽधमा कविवद्भमोक्ताः । मद्गुरवोपोक्तास्तु मध्यमभंगे । त्वाधमा त्वियम्—

विवाहक्रमग्रहस्थेयम्

| | उत्तम | मध्यम | अधम |
|---|---|---|---|
| रवि | ३–६–८–११ | २–४–५–९–१०–१२ | १–७ |
| चन्द्र | २–३–११ | ४–५ ७–९–१०–१२ | १–६–८ |
| भौम | ३–६–११ | २–४–५–९–१०–१२ | १–७–८ |
| बुध | १–२–३–४–५–६–९–१ –११ | १२ | ७ ८ |
| गुरु | १–२–३–४–५–६–९–१०–११ | ७–१२ | |
| शुक्र | १–२–३–४–५–९–१ –११ | १२ | ६–७–८ |
| शनि | ३–६–८–११ | २–४–५–९–१०–१२ | १–७ |
| रा के | २–३–५–६–८–९–१ ११ | १२ | १–४–७ |

अथ चतुर्भिः श्लोकैर्विवाहलग्ने विशेषानाह—

चन्द्रे च लग्ने च चरेऽङ्गनामदेहेऽथ च केन्द्रे बलिनि स्थिते चरैः१ ।
युग्मर्क्षगे वाऽथ विधौ विलोकिते पापग्रहैःरस्पाशुयते पतिव्रयम् ॥३८॥

व्याख्या—चन्द्रे चरराशिस्थे सति लग्ने च चरे सति तयोश्च चन्द्रलग्नयोः स्त्रीग्रहाणां दृष्टौ सत्यां । तथा केन्द्रे इति पञ्चमिसप्तपि केन्द्रे किं पुनस्त्रिषु चक्रवर्तिमध्येऽपि स्थितैः, सूर्येन्दुकुजगुरुशनीरूपैरधिष्ठिते च सति इत्येको योगः१ । मिथुनस्थे चन्द्रे पापग्रहः पूर्णदृशा दृष्टे चेति द्वितीयः२ । उक्तं च दैवज्ञवल्लभे—

'चरराशौ विलग्नेन्द्वोरङ्गनाग्रहदृग्युतो' ।
बलिभिर्ग्रहैर्युगिनि केन्द्रे मखचारी पतिव्रयम् ॥१॥'
चन्द्रे युग्मस्थिते पापैर्दृष्टेऽथवा बोधितः पतिः । " इति

तथा—

रविचन्द्रकुजैर्नीचे१ऽर्केऽमेशे शत्रुराशिगे२ ।

"अत्र मतेऽप्येकादश रुद्रा इत्येकादशं गृहं लक्ष्यते ।
व्ययरिपुरिहिबुकेषु चक्षुःक्रमुमतिमुखैः क्रमशः कुठार एषः ॥ १ ॥
रविकविरविजेन्दुमि क्रमश, व्ययधनपहूनिधनेषु कूर्म एषः ।
व्ययनिधनतनुषु मन्दचन्द्रारुणकिरणैर्मुसलं मुनिभिरुक्तः ॥ २ ॥"

एभ्य श्रीवत्सपूर्वा षट पूर्वे सर्वेषु कर्मसु ।
श्रेयस्तमा धनुर्मुख्यास्त्वन्यथा स्यु परुत्तरे ॥ ४८ ॥

व्याख्या—श्रीवत्सपूर्वा इति श्रीवत्साद्याः षट् पूर्वे प्रथमाः । अन्यथेति अत्यन्तमशुभाः विप्रपत्तु—

"उदयट्ठमगे मर्म्म१ नवपंचमि कूरकंटय भणिय२ ।
दसमचउत्थं सल्लं३ कूरा उदयम्मिव छिद्दं४ ॥ १ ॥
मम्मदोसेण मरणं कंटयदोसेण कुलक्खओ होइ ।
सल्लेण रायसत्तू छिद्दं पुव्वं विणासेइ ॥ २ ॥"

इति पौ (पू)र्णभद्रः ॥

आनन्द१जीव२नन्दन३जीमूत४जय५स्थिरा६मृता७योगा ।
ज्ञगुरुसिते प्रत्येक त्रिकत्रिकेऽथापि लग्नगते ॥ ४९ ॥

व्याख्या—लग्ने स्थितैः प्रत्येक ग्रहैः क्रमेणानन्दादि यथा१, गुरुकर्म्या जीमूत४, ज्ञगुरुभ्यां जय५ गुरुशुक्राभ्यां स्थिर६, त्रिभिरपि अमृत७ । त्रिकत्रिकैरेति त्रिका द्वय रूपाः, त्रिकासमरूपाः ॥

योगा यथार्थनामान सर्वेपूत्तमकर्मसु ।
ऐश्वर्यराज्यसाम्राज्यविघातारः क्रमादमी ॥५०॥

व्याख्या—साम्राज्येति "सम्राट् तु शास्ति यो नृपान्" । अमी इति क्रमाद्व्युत्क्रमिता एककद्विकत्रिकयोगाः । एवमेते सर्वमागाद्ययोर्विवादि ॥

प्रतिष्ठाकर्मे रत्नागवमहस्रयामाह—

प्रतिष्ठायां श्रेष्ठो रविरुपचये३ ६ १० ११ शीतकिरण,
स्वधर्माढ्ये तत्र२ १-६ ९ १० ११ क्षितिजरविजौ त्र्यायरिपुगौ३ ११ ६ ।
बुधस्वर्ग्याचार्यौ व्ययनिधनवर्जौ१ २ ३-४ ५ ६ ७-९ १० ११भृगुसुत.,
सुत यावल्लग्नाग्रवमदशमायेष्वपि तथा१ २ ३ ४ ५ ९ १० ११ ॥५१॥

व्याख्या—भगवत्स्वर्ग त्रिविक्रमेणोक्ताः—

"क्रमसुग्मुषास्तेषु पापा रन्ध्रे शुभाः स्थिता" ।
स्यात्सा देवप्रतिष्ठायां क्रमयशस्करः शशी ॥१॥"

अत्र पापा इति रव्यारशनिराहवो नान्ये, तत पञ्चस्वपि भंगस्थानस्थे ग्रहे सति रव्यादि किंऽपि लग्ने प्रतिष्ठा न कार्या, भगवर्ग विना नेपुषिविषेषु केन्द्रायपरनिष्ठपु च सत्स्वपि रेखाधिक

गोत्रभागिविपत्ति८ पातकपरित्यागौ च९ कार्यक्षतिः१०,
कान्ताकाननरत्नभीतिवपनं११ मन्त्रेन मान्योदयः१२ ॥ ७ ॥

" सकलकुलमिकासु विपुलदः, शनिसमानफलो हि विनायकानाम् । "

भद्रस्याह—

"बलवति सूर्यस्य सुते बलहीनेऽङ्गारके शुभे चैव ।
मेषवृषस्थे सूर्ये क्षपाकरेऽर्चाहरी स्थाप्या ॥ १ ॥"

"मेषवृषगस्थे सूर्ये" इति कश्चित् पठन्ति ।

"बलहीने त्रिदशगुरौ बलवति भौमे त्रिकोणसंस्थे वा । असुरगुरौ चापस्थे महेश्वरार्चा प्रतिष्ठाप्या ॥ २ ॥
बलहीने त्वसुरगुरौ बलवति चन्द्रात्मजे विलग्ने वा । त्रिदशगुरावायस्थे स्थाप्या ब्राह्मी तथा प्रतिमा ॥ ३ ॥
शुक्रोदये नवम्यां बलवति चन्द्रे कुजे गगनसंस्थे । त्रिदशगुरौ बलयुक्ते देवीनां स्थापयेदर्चाम् ॥ ४ ॥
बुधलग्ने अपि वा चतुष्टयस्थे भृगौ हिबुकसंस्थे । वासवकुमारयक्षेन्दुभास्कराणां प्रतिष्ठा स्यात् ॥ ५ ॥
यस्य ग्रहस्य यो वर्गस्तेन युक्ते निशाकरे । प्रतिष्ठा तस्य कर्तव्या स्वस्ववर्गोदयेऽपि वा ॥ ६ ॥
अस्मात्कालाद्धस्ते कारकसूत्रधारकर्तॄणाम् । क्षयमरणबन्धनामयविवादशोकादिकृत्क्रूरः ॥ ७ ॥"

निक्षेपस्तु सर्वमते रेखामते सर्वकार्येषु विंशतिविंशोपकं कर्म स्यात् । तथाहि—

"मच्छुह विसा रविणो पण ससिणो तिण्णि हुंति तह गुरुणो ।
दो दो बुहसुक्काणं सड्ढा सणिभोमराहूण ॥ १ ॥"

एवं लोकमते विंशतिविंशोपाः ॥

प्रतिष्ठाक्रमे विशेषमाह—

बलहीनाः प्रतिष्ठायां रवीन्दुगुरुभार्गवाः ।
गृहेश१गृहिणी२सौख्य३स्वानि४घ्नन्युर्यथाक्रमम् ॥ ५२ ॥

व्याख्या-बलहीना इति अस्तङ्गता नवमा वाऽबल्या मागुक्ता यद्वा नीचः क्रूरयुतोऽस्तमितो वा ग्रहो विबल एव ॥

यथा—

तनु१बन्धु४सुत५द्यून७धर्मेषु९ तिमिरान्तक ।
सकर्मसु१० कुजार्की च सञ्चरन्ति सुरालयम् ॥ ५३ ॥

व्याख्या—तिमिरान्तकोऽर्कः । सकर्मस्विति कुजार्की च चारित्रदशमस्थावपि । सुरालयं नाशयेत् ॥

अथ सर्वकार्ये शुभग्रहाणां शक्तिक्रममाह—

सौम्यवाक्पतिशुक्राणां य एकोऽपि बलोत्कटः ।
क्रूरैरयुक्तः केन्द्रस्थः सद्योऽरिष्टं पिनष्टि सः ॥ ५४ ॥

पार्श्वयोः षोडश षोडश भस्य ६० । कर्तर्याम ६१ कुलिके ६२ । ग्रहणभे ६३ । ग्रहणदूषितधिष्ण्ये ६४ । उत्पाते ६५ चन्द्रात् ६६ समाप्ये वा परमनीचमित्रस्थः क्रूरग्रहः ६७, शुक्रो वा ७० । अशुभ वासरे युगपत् ७१ । अशुभस्थानेषु ग्रहाः ७२ । शास्त्रोक्तापि निषिद्धस्थानेष्वाक्रान्ता ग्रहाः ७३ । लग्नस्य ७४ चन्द्रस्य ७५ उभयोरपि वा प्रत्यक्शुभयतः पश्चात्पार्श्वद्वादशसप्तमे क्रूरग्रहाविति क्रूरकर्तर्या ७६ । लग्नेशः ७७ चन्द्रेशः ७८ उभावपि वास्तपद्यौ ७९, तथैव मासाष्टमौ वा ८२ । अनुक्तो नवांशः ८३ । चन्द्रेण ८४ क्रूरेण वाऽभिमतेनाक्रान्तं लग्नं ८५, मध्यांशो वा ८७ । द्वयोः ८८ स्वयोर ग्रहे ८९ इति ॥

“ एषो मध्यादेकेनापि हि दोषेण दूष्यते लग्नम् ।
त्रिभिर्दोषैर्भिन्नैर्दोषैर्न शुभ दानवो यस्य ॥ १ ॥
चन्द्रस्य मृत्युस्थानस्था १ यमादिरष्टोऽपि रिपुः क्षपा यत्र २ ।
नवमे त्रिभिस्तथा १ भवेत्तदा लग्नमशुभाय ॥ २ ॥
पापग्रहश्च १ केन्द्रग्रहः २ स्यादष्टमगः पापः ३ ।
आसेव त्रिभिरेतैर्भवेत्तदा लग्नमशुभाय ॥ ३ ॥
द्विप्रस्थगाश्चेत् क्रूराः १ सौम्यानां केन्द्रसंस्थितिर्न भवेत् २ ।
लग्नपतिर्दुष्टयुतो ३ भवेत्तदा लग्नमशुभाय ॥ ४ ॥
शुभदृग्हीनं लग्नं १ प्रसूतिम नो शुभैर्युतं स्यात् २ ।
केन्द्रस्थाश्चेन शुभा ३ भवेत्तदा लग्नमशुभाय ॥ ५ ॥ ”

अत्र प्रसूतिममिति षिष्ठ्यास्थापकमन्यायान्वतरस्य लग्नराशिः शुभैर्युतदृष्टो न स्यादित्यर्थः ।

‘ रविभौमौ समरेखौ युक्तौ १ लग्नेऽपि सभामायपर्मे २ ।
केन्द्रगतौ नो सौम्यौ ३ भवेत्तदा लग्नमशुभाय ॥ ६ ॥
व्ययगः सौरे १ नवमे पापस्थगः सद्ग्रहैर्वियुक्तः स्यात् २ ।
लग्नगुरुयुक्तलग्नो ३ भवेत्तदा लग्नमशुभाय ॥ ७ ॥ ’

प्रतिष्ठायां शुक्रेन्दुयुतिः श्रेष्ठा । तेन विवाहादावस्य योगो योज्यः ।

“ जन्मचतुर्थं लग्नं जन्मतिथिः २ मास एव जन्माख्यः ३ ।
जन्मानुजन्मभैर्युतिर्भवेत्तदा लग्नमशुभाय ॥ ८ ॥ ’

इत्यमे समुदायिनो दोषा पृथक्पृथक्च केन्द्रादिस्थैर्न्यग्दे , यदुक्तं व्यवहारप्रकाशे—

‘ हन्ति शतं दोषाणां शशिजः समुदायिनां हि केन्द्रस्थः ।
शुक्रो हन्ति सहस्रं लक्षं गुरुस्तमेकं हि ॥ १ ॥

अथ ये एकाकिनो दोषास्ते द्विधा—साध्या असाध्याश्च । तत्र गण्डान्तविष्टिपरमनीचमित्रकमेव दोषो साध्याः , तेषु सत्सु सर्वमहत्कारिनानागुणसम्भवेऽपि कार्यं न भवति । यदुक्तं—

“ एकोऽपि दूषयेद्दोषः प्रहर्षं गुणसंचयम् ।
संपूर्णं पञ्चगव्येन यथापि सुरा यथा ॥ १ ॥ ”

ये तु साम्यदोषास्तेषां सर्वापहारं श्लोकद्वयेनाह—

लग्नजातान्नवांशोत्थान् क्रूरदृष्टिकृतानपि ।
हन्याज्जीवस्तनौ दोषान् व्याधीन् धन्वन्तरिर्यथा ॥ ५७ ॥

व्याख्या—तनाविति मूर्तिस्थोऽप्रतिबद्धो गुरुरेतान् दोषान् हन्ति । लग्नजातानिति "लग्न दर्शि सनेर्लग्ने" इत्याद्युक्तम् । नवांशोत्थानिति अनभिज्ञनवांशस्वामिना जातान् । क्रूरदृष्टिकृतानिति उक्तं हि " रवावने स्वर्भिपौ दृष्टे युक्ते च " इत्यादि । तथा सति—

" दर्शने यदि स्यादेकस्यद्वादशकमध्यग क्रूरः ।
इन्दोर्लग्नस्य तथा न शुभः सर्वेषु कार्येषु ॥ १ ॥ '

अस्यार्थः—लग्ने चन्द्रेऽन्येऽपि च ग्रहाः स्वस्वत्रिंशांशकस्यास्वात्मकांशिका स्पष्टीकार्या । ततो वैर्मर्दितेन्दू दृश्येते तेषां लग्नेन्दोर्भ मुक्तत्रिंशांशानां विक्षेपे कृते चत् द्वादश यावदुद्यन्ति तावत् क्रूरग्रहो न शुभः, सौम्यग्रहस्तु शुभः । यथा शनिर्दिग्भागस्थो लग्नं चन्द्रं वाऽष्टमांशस्थ पश्यति, न त्वरे कृते द्वादश, एवमेकस्यप्रकारयोऽपि यथा द्वादशभ्योऽन्येम्य उपरिस्थस्य तु क्रूरस्य दृष्टिर्न शुभेति भावः । कृतानपीत्यपिशब्दात् क्रूरयुतिकृता अपि दोषा इह ग्राह्याः । उक्तं हि—" दीक्षायां शुभदो चन्द्रः" इत्यादि । व्याधीनिति यथा वैद्यो मर्धरे धन्वन्तरिर्व्याधीन् हन्ति ॥

शुभग्रहाणां दृष्टेः शक्तिमाह—

लग्नात् क्रूरो न दोषाय निन्द्यस्थानस्थितोऽपि सन् ।
दृष्टः केन्द्रत्रिकोणस्थैः सौम्यजीवसितैर्यदि ॥ ५८ ॥

व्याख्या—निन्द्यति उक्तं हि—"निधनेऽपि क्रूरग्रहस्थौ ' इत्यादि । "मदेऽम्भसि जन्मभांत्" इत्यादि । "शनिस्त्रिकोणकेन्द्रस्थ " इत्यादि । रविः कुजोऽर्कजो राहुः" इत्यादि । " तनुचन्द्र शुक्रपून " इत्यादि च, तेषां तेषां दोषाणामपवादोऽयं । दृष्ट इति च सामान्योक्तेऽत्र दृष्टिः पूर्णाऽभ्यूह्या । यदि च तस्य क्रूरस्य सौम्यजीवसितैः सह मैत्री नैसर्गिकी तात्कालिकी वा स्यात्तदा दोषेऽपि स्वल्पतरो विशेषः । केन्द्रत्रिकोणस्थैरिति बलवत्त्वप्रसङ्गात् लोकगस्तादिमा बलिष्ठतरैरिति भावः । लोकेऽपि उक्तं च—

' क्रूरा हवंति सोमा सोमा सुगुण फलं पयच्छन्ति ।
जइ पासइ किंद्रट्ठिओ तिकोणपरिसंठिओ वि गुरू ॥ १४ "

शुभग्रहसंस्थां सप्रकारमाह—

त्रिकोणकेन्द्रायगतैः शुभग्रहै-
र्विसप्तमेनासुरपूजितेन च ।
स्युः क्रूरचन्द्रे रिपुदुश्चिक्रमाश्य११गे ,
कर्तुः श्रियः सन्निहिताश्च देवता ॥ ५९ ॥

पतिवद्धमे सेवमप्यस्ति—

"उदयास्तांशतुल्यास्मरयोरपि विलोकन ।
योगेऽथवा परे प्राहुरुदयास्तविशुद्धताम् ॥ १ ॥"

विलोकने इति स्वस्वामिभ्यामिति शेषः । योग इति उदयास्तांशाम्बराशयोः स्वस्वाम्यायिपि तयोः सतोरित्यर्थः । इह चोदयास्तशुद्धाधिकारे दृष्टिमात्रेणैव कार्यं, तेन पुष्टाऽपुष्टा वा दृष्टिरिति विशेषो नान्वेष्यः ॥

**विवाहेषु द्वयोर्ग्राह्या विशुद्धिस्तयास्तयो ।**
**प्रतिष्ठादीक्षयोस्तावानस्तशुद्धौ तु नाग्रहः ॥६१॥**

व्याख्या-माहेत्यावश्यके ग्रहण् अवश्यग्राह्येत्यर्थः । नाग्रह इति उदयशुद्धिस्तु सर्वकार्येष्वपि विलोक्यत एवेत्याशय' । श्रीहरिभद्रसूरयस्त्वाहुः—

"पयगइणपइट्ठासु उदयत्थविसुद्धिवज्जियं पि सुहं ।
मन्नंति केइ कम्म त च मयं बहुमयं नेयं ॥१॥"

अथ प्राग्वे लग्ने लग्नांशादौ च गुणदोषचिन्तां कृत्वा निर्णीतेऽपि तत्समय कथा मम्नीति क्षमात्काऽऽज्ञानपर्न वक्ष्यते, तत्रादौ लग्नानां मानमाह—

**मध्ये मेषपन्नमी द्वैर्भनयनै२२७र्मातगतस्त्रे२५८र्वृष ,**
**कुंभो वा मिथुन पुनर्मकरवत्तर्कोग्रवमव्यजैः३०६ ।**
**कर्की धन्विवदम्बराम्बुधिगुणै३४०र्न्नाग्विरामैरलि ३४०,**
**सिंहश्चाथ कन्नीघटौ भद्दरसै१२९रुयन्त्यमी राशयः ॥६२॥**

व्याख्या—मध्य इति दिमवद्विन्ध्ययोर्मध्य" मित्यादिनिर्दिष्ट मध्यदेशे पले ग्ने राशय उपमि उदयं यान्ति इत्यादिरिषुभिः पलैपत्याः पश्चिमाद्वैः पलमानं च पद्भिर्गुर्वक्षरैः, तथाहि—

"द्वः श्रीसत्को विषभीशः सिद्धिर्भीकान्तः, कामद्रुदोलामिर्नागादाधामप्याजीराग ।
चन्द्रश्वेतलोकः स्याद्दारामाप्ते काकाद्यां, वीतापाचः शान्त्या लोकम्याऽसंन्म्यं शीघ्र्यं दधाना॥१॥"

कामकीचन्दः । ईदृशस्य पलप्रमाणवृत्तस्य पद्धिवाद्यन् पठने घटी स्यात् । ननु ध्रुव द्रुततरं मध्यरं मध्यतरं वा पलप्रमाणवृत्तस्य पठनसंभवात् कथमिदं पलमानं न विसंवदन ? नैवं, अद्रुत मन्थरं मध्यमगत्या पठनस्यैवाभीष्टत्वात् , सर्वेष्पदहारायां मध्यमगमेनैव लोके प्रवृत्ते । सूत्रमभिव्य पिता लेखे वा वाच्यं-संगीतशास्त्रप्रसिद्धस्य पञ्चमातृकानाम्यादिरिष्टन चतुर्विंशतिशतन् द्रुतमु त्ताभ्यां सम्यगुद्पन्न सर्वमाऽऽविसंवादि जन्मसमेव स्यात् इति । ताकस्य स्वरुप तदुद्रुपटनादि पिध संगीतशास्त्रवेदिनां सुगमाश्रयः । भनयनैरिति, अत्रार्थ सम्प्रदायः—

'शंकोदया भागपुरंगदसार७८, गोऽष्टाधिना२९९ रामरसा ३२३ गिनाद्यः ।
क्रमोत्क्रमस्थाश्चरसंडके स्वा, क्रमोत्क्रमस्थैश्च विहीनयुक्ता' ॥ १ ॥
मेषादिषण्णामुदयाः स्वदेशे, तुमादितोऽन्त्री च तदुत्क्रमस्थाः ।"

मध्यर ४६ भर्गाविकत्वात्पग्रहणे पञ्च ७६ मीळने पञ्च ७४२, पद्मया भाग लब्धं १२, एवा धमादिनस्य पम्यः, (शेष पञ्च) २२ । मेषसङ्क्रान्तिदिनशेषपम्यः २२ । संक्रान्तिदिनक्षमदिनयो न्तराळे दिन १६ सवृपम्याः ९९० सर्वमीलन आर्त गतपत्याः ९९४, पलानि २२, गतपन्य ३० गुणिता:, मार्त २९८२०, यासां मेषपूपसङ्क्रान्त्यन्तरभुक्त्या १८५७ घटीलरमा भाग लब्ध १६ भागा अंशा इत्यपुक्रन्ते (ते) । शेष १०८, तत् ६० गुणने २२ अपे च मात ६५०२ पुनः १८५७ भाग लब्ध ३ कलाः, शेष ९११, तदपि ६० गुणने जात ५५८६०, तस्मापि १८५७ भागे लब्धं ३० विकलाः, शेष १५०त्यक्त, इति भागकलाविकलाभिरंशादिकार्कः स्फुटः।उसूर्य। गतराशिषु तरिस्युक्तेष्वादिसंक्रान्तिषु गतराशयः पूर्वं क्षिप्यन्ते तथा राश्यादिकोऽपि स्यात्, इह तु मुक्तराशिकोऽपि नास्ति, तेन राशिस्थाने शून्य दत्तं, जात कार्यवेळायां स्फुटाऽर्कः राशि ०, भागाः १६, कलाः ३, विकलाः ३० ॥

अथ स्फुटार्कात्सायनांशार्कस्य भोग्यमानश्च—

गणितविदुपदेशात्तत्र दत्त्वाऽयनांशान्,
पुनरपि भगणार्धं ६ राशिलब्धे तु क्षयात् ।
अथ इत उदयस्थिर्भुक्तशेषैर्लवाद्ये—
रुपरि च खगुणा३०प्त स्यात्पलात्मार्कभोग्यम् ॥ ७॥

व्याख्या—तत्रेति स्फुटार्केऽयनांशान् पुनरपि भगणाख्यपूर्णीयाः क्षिप्यन्ते, अयनांशानिरयतो चेऽपि कदापि लभ्यते, तासां तदशस्वलात्, एव सर्वत्र । पुनरपीति अथ चन्द्रादिक्रम स्यात्तथा पुनर्भगणार्धं षड्रूप राशिमध्ये क्षेप्यं । अथ इत इति एवं कृते उपरि यो राशिस्तगतः स भुक्तः, परन्तु तद्मेवना राशि स उदय उच्यते तस्मात् पञ्चरूप त्रिः स्मात्पत भयत्र या अंशसख्या विकला सन्ति ता भुक्ता ता र शेषा या अंशकलाविकला सन्ति तामिस्तत्प्रमान त्रिम्याः च क्रमानुण्यते, अथोऽङ्कयोः पद्मया भ ग दत्ता दत्ता उपर्युपरि क्षेपे योऽङ्क ऊर्ध्व स्यात्तस्य खगुणेति त्रिंशता भागे यल्लभ्यते तत्सकरमकमकभोग्यं स्यात्, तदुरितांकम पद्मया सगुण त्रिंशा भागेऽधोऽङ्कराशयस्यायान्ति ।

अथोदाहरणमनुस्रियते—अयनांशानयने तावद्गणितविदामुपदेशोऽयं—शैकमानात्पञ्चशा५ ७१ दपात् ग्राशाशु अभ्यन्त्यपि४४४ वर्षादारभ्य अभिवर्धमाना१२ ४क्ष्मानि यावत् मतिवर्षमेरा कळेषा विवसा विंशतिः परमविकलाश्च वर्धन्ते, पदया कलाभिरयनांशाः । एवं १९०८ वर्षेः २३ अंशाः ५५ कलाः १२ विकलाश्च वर्धन्ते इत्ययनांशावृद्धिरिष्टा, पुनस्तमैव क्रमेण हीयमानाश्च तावद्दिता १४०८ वर्षैर्निर्विशेषमिष्यन्ति एव पुन पुनस्वद्वृद्धिह्रासौ भाव्ये, एवं च क्रम काऽतिसाम्य अयनपने चोपपाताः । उक्तं च —

" अयनांशाः सदा देया क्रमे क्राम्तौ चराममे । "

इदानीं चायनांशानयनाय करणमिदम्—

शयांशौ। एतावदंशाः पद् कलाश्च चत्वारिंशदिति स्यात्, एकैकस्य त्रिंशांशस्य पष्टिकलात्मिकत्वात् ग्राभ्यां त्रिभागाभ्यां स्थिताभ्यां चत्वारिंशत्कलाः स्युरिति भावः। एतच्च छम सायनं क्रियते, अयनांशाः १५ कलाश्च ३४ मीस्यन्ते। तथाऽतीता राशयो ये सुखेयामङ्को राशिस्थाने दीयते, स चात्र त्रिक एव, कर्के लग्नस्य गृह्यमाणत्वात्। वर्तमानाङ्कस्थाने एकः प्रकृत्यंशो दीयते कलास्थाने च, यत एकैकस्मिन्नंशे त्रयस्त्रिंशांशाः कलाविंशतिश्च स्युः, तस्मिन्नागे कृते यथोक्तमेवायातीति, ततो जात त्रयो राशयोऽतीताः, वर्तमानकर्कलग्नस्य चांशाः २१ कला २१ एतावत्कुर्म्भ, गततिथिभिश्च नास्यत्रोपयोगः, ततस्तत्कुर्म्भेन वर्तमानकर्कलग्नकुलेन १३ भाग २१ कलारूपेण ततु भमोऽत्र प्रस्तावात् कर्कोदयः ३४१ पलरूपो त्रिन्निर्भस्य गुणितः, यदि विकलाः स्युस्तदा त्रिन्निर्भस्य तृतीयस्थाने विकलाभिरपि गुण्यते, इह तु ता न सन्तीति त्रिरेव न्यास कृते, जातं क्रमात् ७८४३—७१६१, अयः ६० भागे लब्धं ११९, अस्योपरि क्षेपे जातमुपरि ७९६२, अस्य ३० भागे लब्धं पलानि २६५ क्षेपं १२, तस्य ६० गुणने ३० भागे च लब्धं अक्षराणि ७७, इह २६५ पल २४ अक्षररूपं कर्कलग्नभुक्तं। रविभोग्ययुक्तमन्तराले लग्नपलप्रमाणरूपान्तरोदयपुत च क्रियते, यथाऽत्र रविभोग्यं पलानि २४२, आन्तरोदयस्तु मिथुनमेव, तस्मात् ३०९, प्रयातो मीलने जातं ८१२ सूर्योदयादिपलतैः, कोऽर्थः? ११ घटीभिः १२ पलैश्च गते कर्कस्य कन्यांशः समेतीति। विशेषस्तु—

"ध्रुवोर्मेषांशमोः शुद्धि प्रतिष्ठायां विशेष्यते। व्याखेऽधिवासनाविम्बे द्विगैर्ग च लग्नांशिका ॥१॥
संस्थाप्य लग्नमानं गुणयेन्मध्यमसत्वांशकैः। नवभिस्तु हृते भागे लब्धेऽन्तरपलागमः ॥ २ ॥"

अत्र कश्चिदमुदाहरणमात्र यथा—अत्रैव कर्कलग्ने प्रतिष्ठायां तृतीयः कन्यानवांशोऽष्टमः कुंभ नवांशश्च गृह्यमाणौ स्तः। ततश्च कुंभनवांशादर्वाक् कन्यादयो नवांशाः पञ्च सन्ति, अतः कर्कमानं ३४१ पञ्चभिर्गुणयत् जात १७ ५, अस्य नवभिर्भागे लब्धं १८९, इदं च तृतीयकन्या नवांशग्रहणाय स्पष्टीकृते ११ घटी १२ पलरूपे काले क्षिप्यते, जातं घटयः १६ पलानि ४१, इयति काले गते कुंभनवांशवेला ॥

अथ लग्नांशसमयस्पष्टनाधायनांशनिरपेक्ष प्रकारमाह यथा—

## संक्रान्तिराशेर्गतनाडिकाभ्रे, माने विना निश्चयथ सप्तमस्य।
## संक्रान्तिभोगेन हृते तदीयऽपशान्विते शेषमिहार्कभोग्यम् ॥६९॥

व्याख्या—दिनलग्ने सूर्याक्रान्तराशेर्याम संक्रान्तिसमवात् प्रभृति लग्नसमयावधि या घटयो गतास्ताभिर्गुण्यते। रात्रिलग्ने तु सति सूर्याक्रान्तराशेः सप्तमो राशिस्तन्मानं ताभिर्गुण्यते। ततः स्वान्तरमुक्तया भज्यते। यल्लब्धं तन्मध्ये प्रस्तुतराशेस्त्रिभागाः पृथक्कृत्य दिप्यते। ततस्तया हृते अपि यस्यास्तदर्कभुक्तं सूर्याक्रान्तराशिमध्यात् पत्यते, यच्छेष तदर्कभोग्यं।

यथाऽत्रैव दिनलग्ने संक्रान्तिराशेस्तदानीं सूर्याक्रान्तराशेर्मेषस्य मान २२५, तत्संक्रान्तिसमवादनु लग्नतोऽर्वाग् या गता घट्य ९९४, ताभिर्गुणितं जातं २२३६५० । अस्य स्वान्तरमुक्तया

१८५७ लब्धा भागो लब्धं पलानि १२ । तत्पश्चार्कोकान्तरांशेर्मानस्य त्रिभिर्भागे महत्यत्र लब्ध स्मे क्षेप्यं । यथाऽत्र अयमानस्य २२५ त्रिभिर्भागे लब्धं पलानि ७५ । इदं भागागीत १२० मध्ये क्षिप्तं, जातं १९५ इदं सूर्यभुक्तं । सूर्याकान्तरांशेर्मेषस्य मानात् २२५ रूपात् पात्यते, जातं ३ पलानि इदमर्कभोग्यं, एवं दिनलग्न कार्यं ।

रात्रिलग्ने त्वर्काभ्यन्तरांशस्थितः सप्तमस्य राशेः सूर्यभुक्तघटीगुणनतदन्तरमुक्तिमननाय सर्वम-
प्यर्काकान्तरांशिवत् कार्यम् ॥

मुक्तेऽथ लग्नस्य तदंशकाद्य, द्वयाविभागाद्युदयप्रवृत्यो ।
तल्लग्नमुक्तं च तथार्कभोग्यं, कालोऽन्तरालोदययुक् पलात्मा ॥७०॥

व्याख्या—मथेति तदनन्तरं । तदंशकादिति इष्टमर्वाभागार्काकृतने लग्नस्य भुक्ते त्वयमप्रवृत्यो-
विभागौ यथाविस्तन्नयः । अवमर्मा—भविकृतनर्वाभागांशार्, यावन्मात्रं लग्नस्य भुक्त तत् सार्धी
इत्य तन्मध्ये तल्लग्नस्य विभागं तमर्वाशस्य च विभागं प्रवृत्त्यंसापराह्णं क्षिपेत् तदन्तलग्नमुक्तं
पूर्वोक्तमर्कभोग्यमन्तराललग्नपलमानं च मीलयेत्, यत्स्याताभिः पलैः सूर्योदयात् इष्टलग्ने
होऽस्तः स्यात् ॥

यथाऽत्र कर्कस्य मानं ३३१, मत्रिभिर्भागे लब्धं पलानि ३८, इदमेकनवांशमानं इदस्य
तृतीयस्य नवांशस्यार्धांद् च द्वौ नवांशौ स्त तेन ३८ द्विगुणाः, जातं पलानि ७६, इदं लग्नं
भुक्तं, ततोऽत्र कर्कमानस्य ३४१त्रिभिर्भागे लब्ध पलानि ११४, अयमुदयमर्धांशो लग्नमुक्तस्य ७६
पलरूपस्य मध्ये क्षिप्यते जातं १९ । तमनु यो नवांशो यतोऽस्ति तस्य पम्मानं १८ पलरूप,
तस्य विभागः पल ११ रूपः, सोऽपि तन्मध्ये क्षिप्तः जात पलानि २०२ । रविभोग्यं च
पलानि १ । तदर्काभ्यन्तरांशेस्थितलग्नस्य भान्तपके वृषमिथुनौ स्तः तयोर्मानं २५६–२०५ ।
सर्वेषां स्थापना—२ २–२०–२५६–२०५ मीलने पलानि ७९३, एषां ६० भागे लब्धं
घटयः १३ पलानि १३ । एवमिष्टलग्नेनार्कोदयात् कन्यांशागमः । कलान्तरत्वात् पलेषु वैसदृश्यं
न दोषाय । एवमन्यत्रापि भावनीयम् ॥

एव समात्करानयनमुक्तं, अथ प्रत्ययार्थं वृत्तद्वयेन कालानयनमाह—

स्वस्वाऽर्कभोग्यं च पलात्मकालान्नागादिभोग्यं तरणौ निदध्यात् ।
क्रमेण शेपानुदयान् विशोध्य, राशीन्न्यसेत्स्त्प्रमितांश्च भानौ ॥

व्याख्या—कश्चिदिष्टघटीपलमानमुक्त्वा तदानीं कलग्नमांशादयस्तीति पृच्छेत्तदा
तद्युत पलादि सर्व पलीकार्यं । ततस्तत्र यावत्कमानमर्कभोग्यं स्यात्तस्मात्पलीकृतकालात् शोध्यं,
भागादीति सायनस्फुटार्केण यो राशिराक्रान्तस्तस्य शेषपलकमविकलात्मं सूर्यभोग्यं तत्राविति
सायनस्फुटार्के एव न्यसेत् स राशिः पूर्वोक्तरूप शेषः इत्यर्थः । ततस्तस्मात् पलीकृतकालाच्च

भागाः १ कलाः २७ विकलाः १० । अत्र सायनार्केण मेषराशिः पूर्वोऽपि भुक्तो वृषस्य चैको ऽशः १ कलाः १७ विकलाश्च १० भुक्ता इत्यागत, ततोऽत्र वृषराशिसत्का दिनवृद्धिः पल २ अक्षर ५२ रूपा गता, ततोऽस्यापाद्य गोमूत्रिकारीत्या स्थानद्वये न्यस्य एकत्र द्विकेन अपरत्र द्वा पञ्चाशता च गुण्यन्ते । स्थापना । २–५२ गुणिते च जातं क्रमात् २–७४–६० । ५२–१९२४–१५६० । सर्वाधःस्थस्य ६ भागे लब्ध २६, इदमुपरिस्थे क्षिप्तं, जातं १९५० इद मधस्तनसमस्थाङ्केन ६० रूपज सह समर्पणस्यत्वात् मीलितं, जात २०१० । अस्य ६० भागे लब्धं ३३ उपरिस्थिते जातं पलानि ८५। एतन्मध्ये मायराशिसत्का ७४ रूपेऽङ्क समपक्षिरथ स्थान् क्षिप्तो जात १५९ । अस्य ६० भागे शेषं अक्षराणि १९, लब्धं पले २ उपरि क्षिप्तं जातं पलानि ४ । अस्य ६० भाग लब्ध घटीस्थाने शून्यं । स्थापना—घटी० पलानि ४ अक्षराणि १९, इदं दृषाधादिर्मनि घटी ११ पल ४६ रूपे क्षिप्तं, जात घट्यः ११ पलानि ५० अक्षराणि १९ इदं स्पष्टं तद्दिनमान । तद्रात्रिमानं तु घट्यः २८ पलानि ९ अक्षराणि २१ ।

अथैतो मध्यच्छायानयनं यथा—

> 'ज्येष्ठदिनार्धमिं शोध्यं शेषाद्दशगुणात् स्वतः।
> स्वांशेस्सप्तशरै५७र्लब्धं सूर्यै१२र्माच्छायाऽन्तःस्वयाः ॥१॥"

व्याख्या—दिनार्धमानं ज्येष्ठार्धमानाच्छोध्यते, शेष दशभिर्गुण्यते, ततश्च स्वत इति तदेवाधो न्यस्य ५७ भाग लभ्यते तन्मुख्याङ्गुलान् कर्ष्यते, भागाप्राप्ती यदि ५७ अपेक्षयोर्ध्वस्थाङ्कोऽधिकः स्यात्तदा रूपं गृहीत्वा मुख्याङ्गुलान् कर्ष्यते, तदनु तस्य सूर्यै१२र्भगे यल्लभ्यते ते मध्याह्नच्छायायां पादाः शेषाण्यङ्गुलानि । यथाऽत्र तद्दिनमानं ज्येष्ठार्धमानात् घटी ३३ पल ४८ रूपाच्छोधित जात घटी १ पलानि ५७ अक्षराणि २१, इदं शेषस्थाङ्कैर्दशभिः संगुण्य पष्ट्या भक्त्वा भक्त्वा उपरि क्षेपे जातमधः २१ ऊर्ध्वं च १९ । अस्य च ५७ भागो नाप्यते,नापि१७ अपेक्षयाऽस्याधिक्यं, तत स्वलब्धिकामङ्गुलैककोमविशतेः १२ भागे लब्धं पदं १, शेषमङ्गुलानि ७ व्यङ्गुलानि ३३, इय तद्दिने मध्याह्नच्छाया ।

अथेत इष्टकालच्छाया

> "समदीकर २१० हतदिवसे विहृते वाञ्छितपलैर्युगतशेषै ।
> लब्धं मध्यपदैर्युग् नग७रहितं स्यात् पदच्छाया ॥ १ ॥"
> घायमर्क१२गुण हत्वा वाञ्छितैस्तु पदैर्हृतम् ।
> लब्धमङ्गुलसंज्ञं स्यादेवं छायाङ्गुलागम ॥ २ ॥"

स्पष्टो । उदाहरण यथा—तद्दिनं घट्यः ११ पलानि ५० अक्षराणि १९ , इदं २१० हतं जातं ६५१०–१०५००–८१९ । पष्ट्या भक्त्वा भक्त्वा उपरि क्षेपे जातमधः १० तदुपरि १६, तस्यापूर्व ६६८७ । ततोऽस्य गुणवेति पूर्वाह्ने गतपलैर्भागः, अपराह्ने तु सपपलैः । अत्र पूर्वानीत १२ घटी १२ पलसत्कै८१२भागे लब्धं पलानि ८, शेषं १९१, तत् १२ गुणनेऽत्र स्य १६ क्षेपे च जात २३०८ अस्य ८१२ भाग लब्धं अङ्गुलस्य २, शेष ६८४ इदं व्यङ्गुलानय नाय ६० गुणं, अधःस्थ ३० क्षेपे जातं ४१०७०, तस्यापि ८१२ भागे लब्धं व्यङ्गुलानि ५०,

यदि० बु रेवतीऽर्वाक् पादत्रयस्य यात्वाः सर्वर्क्षनाडयः ४५७ । तामिर्भागे लब्धं कलाः २२१ विकलाः ११ क्षेपे ३११, तस्य ४५७ अपेक्षयाऽर्योविक्याद्विकलाः १२ । कलानां ६० भागे लब्धं २ अंशाः उपरि बुधराशि १ स्थाने जाताः स्पष्टो बुध' १-३-४१-१२ । तद्गतिरपि च दूरस्था एवं ६० गमने पादत्रयं नाडीभि४५७र्भगमे च जाताः कला' ७८ विकलाः ४६ ॥

अथ गुरुस्ताद्दिनेष्वार्द्रायपादेऽस्ति । तदानीं गतपदम' २७६ । कथ ? ऐंद्र प्र गु० ३७ । तद्दिनक्षेपनाडयः २३ । कार्येदिनपदयः ११ । अन्तराकदिनचतुष्कपदयः २४ मीलने २७६ । ता गुरोः पादगतत्वात् २०० गुणा जातं ५५२०० । आर्द्रायपादभागसर्वनाडयः ११९१ । ता मिर्भगे लब्धं कलाः ४६ विकला १८ मृगार्धसत्वा' ४० कलाः कलासु क्षिप्ता जातं ४४६ । तासां ६० भागे लब्धं ७ अंशाः उपरि गुरुराशिस्थाने जाताः स्पष्टो गुरु २-७-२६-१८ । तद्गतिरपि द्विसत्वा एव६० गुणमे आर्द्रिकपादसर्वनाडीभिर्भगमे च जाताः कला१०विकला ४॥

अथ शुक्रस्तद्दिनेषु पूर्वभद्रपदास्वस्ति । तदानीं गतपदना ५४१ । कथं ? पू० भ० सि० १२ तद्दिनक्षेपपदना४८ । इष्टदिनपदयः ११ । अन्तराकदिन८पदय ४८० मीलने ५४१ । ता पूर्वभद्रपदपादत्रयस्यैव कुंभस्थत्वात् ६०० गुणा जातं १२४६०० । अथ मीने सि रेवतो-ऽर्वाग यात्वा पद सर्वनाडयः ५८९ । तामिर्भागे लब्धं कलाः ५५७ विकलाः४४ शुक्रनवां-शानां पण्णां कलाः १२० कलासु क्षिप्ता जाताः १७५७ कलाः विकलाः४४ । तासां ६० भागे लब्धाः २९ अंशाः उपरि१० राशिस्थाने जाताः स्पष्टः शुक्रः १०-२९-१७-४४ । तद्गतिस्तु कलाः ६१ विकलाः ५१ ॥

अथ शनिर्थाभी तद्दिनेष्वाश्विन्याभाद्रपदपादेऽस्ति । तदानीं गतपदनाः १४७७ । कथं पुनरत्र च शा ११ । तद्दिनक्षेपपदयः २४ । इष्टदिनपदयः १२ । अन्तराकदिन२४ पदयः १४४० मीलने १४७७ । ता शनेः पादगतत्वात् २ ० गुणा जातं २९५४०० । पूर्वपादभागसर्वपदया ४१८२ । तामिर्भगे लब्धं कला७० विकलाः १८ । इदं शनेर्बेभित्वात् २०० सम्पात् कर्णमि जातं १२९ कलाः २९ विकलाश्च । उपरितनमत्वाच्चतुष्कसत्क ८०० क्षेपे जाताः ९२९ कलाः। तासां ६० भागे लब्धं १५ अंशाः उपरि ७ राशिस्थाने जाता' स्पष्टः शनिः ७-१५-२९-२९ । तद्गतिस्तु कले २ विकलाः ५२॥

अथ राहुस्तदा चित्रास्तपादेऽस्ति । तदानीं गतनाडय १२८१ । कथं ? चित्रा० च रा० ५० । तद्दिनक्षेपपदयः १ । कार्यदिनपदयः ११ । अन्तराकदिनानि २१ तद्पदयः १२६० मीलने १२८१ । ता राहोः पादगतत्वात् २०० गुणा जातं २५६१६०० । अत्र चित्रास्तपा-दभोगसर्वनाडया ३७७४ । तामिर्भागे लब्धं कलाः ६७ विकलाः ५९ । तासां २ ० लब्धात् पातने जातं कलाः ११२ विकलाः१ । कन्यायामपि चित्रातृतीयपादसत्क२०० कलाः क्षिप्ताः जाताः कला' ३१२ । कलानां ६० भागे लब्धं ५ अंशाः । उपरि ६ राशिस्थाने जातो भोग्यापंचमा स्पष्टो राहुः ६-५-११-१ । गतिस्तु कलाः ३ विकलाः ११॥

पश्चाद् राहवंके ६ क्षेपे जातः स्पष्टः केतुः —५-१२-१ । गतिस्तु राहुवदेव । अत्र तात्का-लिकस्पष्टीकृतग्रहाणां लग्नविकानां स्थापना यथा—

गमागोमध्यमिमे इतिवचनात् जातं २८४१२१-४ । ततः बुधाद्दिनमर्क निरीक्ष्यते मार्गशिरसमा पसु १४ दिने मृगे बुधः ४७ इति लिखितं स्त । ततो बुधमार्गशिरदिनसेवघटी १५ मृगे बुधा गमनदिनघटी ४५ अन्तरालदिन ११ घटी ७८० भोग्ये ८४२ । आभिः सर्वदेनाडीभिः पूर्व-स्थाङ्कस्य १८४१२१ भागे लब्धं कलाः ४५६ विकलाः ४८ । कलानां ६० भागे लब्धं ७ भागाः शेषं कलाः ३६ विकलाः ४८, इत्य मार्गशिरदिनविभक्तिलिखितभाग ११ कला ११ विकला ८ मध्ये क्षिप्त मार्ग पश्चात् स्वल्पेविवचनात् जातं भागाः २० कलाः ४९ विकलाः ५५, इदं लग्न-वेलायां बुधेन इष्टराशेर्भुक्तं । उपरि १ राशिदाने जातः स्पष्टो बुध १-२०-४९-५५ । गति स्तु १० ६-५२ इत्याद्यङ्कस्य ६ गुणने १८९ सर्वदिननाडीभिर्भागे लब्ध कलाः ७१ विकलाः ३२ । अनया कलं कलाद्य फल पूर्वानीतमध्येषु योज्यं । एवमन्येषामपि ग्रहाणां वर्तमानस्वानुसा रेण साधिता कार्या । इत्य सर्व ज्योतिर्विदां सर्वदेश्यत्वात् मस्ताभाव दर्शितम् ॥

अथ विवाहे गोधूलिकलग्नमाह—

सन्ध्यालग्नमपि श्रेयो गोखुरोत्खातधूलिभि ।
गोपानां हीनवर्णाना प्राच्या च स्यात्करग्रहे ॥ ७१ ॥

व्याख्या—सूर्यस्यास्तसमयेऽर्धबिम्बमस्तमयन्तु गोखुरोत्खातधूलयो यत्र सायमपि यावद्गो-धूलिकलग्नसमय, अत एव धूलिभिरित्युक्तं यावत्ता भेस्यन्ते तावदिति भावः । अत्रापि च त्रैव मधुमासादपरमाभिन्नासुदनिकुलकोपसङ्कमाचार्यैरिति स्थानाभिरिर्णितं । अत इति लोकस्वनोक्तं । हीनवर्णानामिति सामान्येनोक्तं वक्तृपरा— "अटिकाग्रमामात्रे ब्राह्मर्णं गोरजोऽपि विवेम" । इति ॥

अथ गोधूलिके वर्जनीयेन दुष्टिरपेत्य इत्याह—

शीतद्युतिं षष्ठमथाष्टमं च, मध्यार्धयामौ कुलिकं च हित्वा ।
विनापि लग्नांशखगानुकूल्य, गोधूलिक प्रामहरं वदन्ति ॥७२॥

व्याख्या—षष्ठमिति लग्नात् षष्ठमष्टमेन्दुः चन्द्रामृत्युः, भौमोऽपि मूर्त्यष्टमगः मृत्युर्मृत्यु-स्थानस्थश्च म्योति सारगः । मध्यामौ कुलिकं चेति अनेन गोधूलिके गुरुशनिवारे त्याज्यौ यदि मध्योत्तरानी अर्धेयामकुलिकोदयादेरिरपद्युचि । केशवार्कस्त्वाह—

'सार्के शनौ निशिविवाहोदितिसूनी, उल्लेख्य कुलिकयामदलोपकर्मण ।"

अत्र सार्कमिति शनौ सूर्ये सति गधूलिक कार्यं, यस्मात् कुलिकमवचनात् । गुरौ तु सूर्यास्ता न्तु कार्यं, प्रथममर्धयामसद्भावादिति । यत्र मत । विनाऽपीत्युक्तेऽपि च किञ्च कान्तिसाम्यादयो दृष्टदोषास्त्याज्या एव । उक्तं व्यवहारप्रकाशे—

"कुलिकं क्रूरयुक्तं व्यतिपातं वैधृतिं च संक्रान्तिम् ।
षष्ठं चाष्टं मदनमथाग्निगुरुविमनाम्बिताम्याणि ॥ १ ॥
दम्पत्योरष्टममर्भ लग्नस्य् मध्याष्टमं च शीतांशुम् ।
परिवर्जयोरुक्तदिं विवर्ज्य गोधूलिकं शुभदम् ॥ २ ॥
गोधूलिकपरिणयने येषा केन्द्रोपगः शुभो न गुरौ ॥ ३ ॥

अन्मर्क्षादुपचयमे स्थिरेऽथ शीर्षोदयेऽथवा भवने ।
सौम्यैर्विलोकितयुते न तु पापैर्नृपमभिषिञ्चेत् ॥ ८० ॥

व्याख्या—अभिषिच्यमानस्य पुंसो जन्मराशित उपचयम लग्नस्थ सति, यद्वा स्थिरे लग्ने, अथवा शिर्षोदयिनि। न तु पापैरिति क्रूरग्रहैरदृष्टेऽयुते चेत्यर्थः ॥

यमार्कयोस्त्र्याय३।११गयोर्गुरौ तु,
सुखाम्बर४।१०स्थे नृपतिः स्थिरश्री ।
यद्वा त्रिकोणो९।५दयगे१सुरेज्ये,
शुक्रे नभ१०स्थे क्षितिजे रिपुस्थे६ ॥ ८१ ॥

व्याख्या—यमः शनि ॥

अभिषिक्तो बलीयोभिर्ग्रहैः केन्द्रत्रिकोणगे ॥
क्रूरः पापे शुभे सौम्यो मिश्रे साधारणो भवेत् ॥८२॥

व्याख्या—यदि केन्द्रत्रिकोणगा बलिनो ग्रहाः सर्वे क्रूरास्तदा नृपः क्रूरः स्यात्। सर्वे शुभा श्चेत्तदा सौम्यः। यदि मिश्राः, कोऽर्थः? केचित् क्रूराः केचिच्च सौम्या इति तदा साधारणो नातिक्रूरो नातिसौम्यश्च। अपि च "त्रिषुगुरुयुक्तैः सर्कि" इति यः श्लोक उपनयाधिकारे प्रोक्तः सोऽत्रापि योज्यः ॥

अभिषेके दुष्टयोगमाह—

चन्द्रे सौम्येऽपि वाऽन्यस्मिन् रिपुरन्ध्र६।८स्थिते ग्रहैः ।
क्रूरैर्विलोकिते मृत्युरभिषिक्तस्य निश्चित ॥ ८३ ॥

व्याख्या—विलोकिते इति पुरदृष्ट्या ॥

अभिषेके लग्नादिषु पापग्रहस्थिते फलमाह—

रोगी तनु१स्थैरधनो धनान्त्य२।१२गै
र्दुःखी च पापैर्नृपतिस्त्रिकोण५।९गैः ।
पदच्युतोऽस्ताम्बु७।४गतैर्मृति८स्थिते
रल्पायुराकाश१०गतैरस्वकर्मकृत् ॥ ८४ ॥

व्याख्या—अस्वकर्मकृदिति अभिषिक्तो निजधर्म त्यजति ॥

इति वक्तव्यता येयं भूपालस्याभिषेचने ।
आचार्यस्याभिषेकेऽपि सा सर्वाप्यनुवर्तते ॥ ८५ ॥

धुधिकलग्ने तुर्ये तुलांशे भाद्यमेषार्धस्थित्वाविंशति २८ पलेषु लग्नाशुद्धेः पञ्चवर्गशुद्धिर्भवत्वर्थं च ८ । धनुर्लग्ने षष्ठे कन्यांशे संपूर्णेऽपि पञ्चवर्गशुद्धिर्लग्नाशुद्धेर्भवत्वर्थं च । तथा धनुर्लग्ने सप्तमे तुलांशेऽन्त्येषु नव९ पलेषु लग्नांशाशुद्धेः पञ्चवर्गशुद्धिः पृथ्वीतत्त्वं च । तथा धनुर्लग्ने नवमे धनुरंशे आद्येषु नव९पलेषु लग्नांशाशुद्धेः पञ्चवर्गशुद्धिः पृथ्वीतत्त्वं च ९ । मकरलग्ने पञ्चमे वृषांशे आद्येषु षोडश १६ पलेषु लग्नाशुद्धेः पञ्चवर्गशुद्धिर्भवत्वर्थं च १० कुम्भलग्ने पञ्चमे वृषांशस्या न्त्येषु विंशति २० पलेषु लग्नाशुद्धेः पञ्चवर्गशुद्धिर्भवत्वर्थं च । तथा कुम्भलग्नेऽष्टमस्य वृषांशस्या न्त्यानि चतुर्दश१४ पलानि नवमस्य च मिथुनांशस्याद्यानि सप्तविंशतिपलानि२१पलेषु लग्नाशुद्धेः पञ्चवर्गशुद्धिः पृथ्वीतत्त्वं च ११ । मीनलग्ने आद्ये कर्कांशे आद्येष्वष्टादश१८पलेषु पञ्चवर्गशुद्धिः पृथ्वीतत्त्वं च । तथा मीनलग्ने तृतीये कन्यांशे संपूर्णे पञ्चविंशति२५पलरूपे पञ्चवर्गशुद्धिः पृथ्वी तत्त्वं चेति १२ । कृत्यामीति अत्र कृत्याः मांगु'—दीक्षाप्रतिष्ठावतिष्ठादीर्घयात्राप्रस्थानादिकार्येषु यत्र कार्ये यस्मल्लग्ने यो वारो वा तिथिर्वाधिकृतास्ति तानि कृत्यानि सम्यगेवलोक्य सर्वमासिद्धियोगादियुतां पूर्वं विनशुद्धिस्ततो लग्नशुद्धिर्नवांशशुद्धिश्च विलोक्यते । सर्वथापि शुद्धलग्नाभावे कार्यस्यात्यावश्यकत्वे च शुभदिनशुद्धौ छायालग्ने शुभलग्ने विजयमुहूर्ते शुभचतुर्घटिके वा कार्यं कार्यमिति संक्षेपमभ्यस्यं । प्रकरणमिति यत्र कृत्यानि कार्याणि सर्वाण्यपि तत्प्रकरणं प्रबन्धमिव ॥

इति श्रीमति आरंभसिद्धिवार्तिके विलग्नविमर्शद्वारपरीक्षात्मकः पञ्चमो विमर्शः संपूर्णः ॥५॥

श्रीसूरीश्वरसोमसुन्दरगुरोर्निर्ग्रन्थचिन्तामणी-
 गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्यद्दीप्यते साम्प्रतम् ।
तच्छिष्यामयहेमहंसरचितस्यारंभसिद्धेः सुधी
 श्रृङ्गारादिमवार्तिकस्य सुषमा ५ संख्यो विमर्शोऽभवत् ॥ १ ॥
 विमर्शैः पञ्चभिः सम्यग्विमर्शैरिव संहितम् ।
 न कस्याद्भुतदायीदं सुधीश्रृङ्गारवार्तिकम् ॥ २ ॥

शब्दन्यायतिथ्यादिशास्त्रमयनिस्तुषनिपुणशास्त्रया सारं सारं शुद्धिमयमुपसदाय किमपि ।
सुधीश्रृङ्गारोऽयं स्मराधि रुचिरः सेव सुधियां, करे कण्ठे कर्णे हृदि च सुषमां पाठपदं ॥३॥

अथ प्रशस्तिः ।

श्रीमच्चन्द्रकुले पुराऽजनि जगच्चन्द्रो गुरुर्यस्तपा
 चार्यख्यातिमवाप तीव्रतपसा तस्यान्वयेऽजायत ।
सौरः श्रीवरदेवसुन्दरगुरुस्तत्पट्टपूर्वागिरेः,
 भानुः श्रीमत्सोमसुन्दरगुरुर्भानुर्नवीनोऽभवत् ॥ ४ ॥

यतः—

मानोर्मानुषगानि षोडश यशस्येकम मास्याभिने,
 यच्छिष्यास्तु तपोऽभिधा अपि महीमुख्योदयन्ते सदा ।
तस्यान्वे चरणानुपालितपि चिरं श्रीमत्तपागच्छप-
 क्षोणीविश्रुतसोमसुन्दरगुरोर्मारिमित्रूरामणेः ॥ ५ ॥

आचार्येण निवारिताऽऽसुरकृता संभूय शान्तिस्तवं,
सूरिः श्रीमुनिसुन्दराभिधगुरुर्दीक्षागुरुः सोऽव मे ।
यस्य ध्यानसरस्वतीति बिरुदं विख्यातमुर्वीतले,
गुर्वी श्रीजयचन्द्रसूरिगुरुरध्यापनात् प्रसत्तिं स मे ॥ ६ ॥

साम्प्रतं तु जयन्ति श्रीरत्नशेखरसूरयः । नानाग्रन्थकृतस्तेऽपि पूर्वाचार्यानुकारिणः ॥७॥
एतानाचार्यहर्यक्षान् प्रत्यक्षानिव गौतमान् । वीतमायः स्तुवे स्फीतश्रीतपागच्छनायकान् ॥८॥

अपि च—

एकोऽप्यनेकशिष्याणां यश्चित्ताम्भोजान्यबोधयत् । तं श्रीचारित्ररत्नं भो नमोऽरत्नसमं स्तुमः ॥९॥
चिन्त्यमाना मयाऽपीयं पूर्णा शुभप्रसादतः । हेमहंसाभिधानेन वाचनाचार्यताजुषा ॥१०॥

श्रीमद्विक्रमवत्सरे मनुतिथौ १५१४ शुक्लद्वितीयातिथौ,
नक्षत्रे गुरुदैवते गुरुदिने मासे शुचौ सुन्दरे ।
आशापल्लिपुरे पुरः प्रणितिभिः श्रीमद्युगादिप्रभोः-
ग्रन्थः सैष समर्थितः प्रथयतादायं पुमर्थं सताम् ॥ ११ ॥

इति श्रीतपागच्छपुरन्दरश्रीसोमसुन्दरसूरिश्रीमुनिसुन्दरसूरिश्रीजयचन्द्रसूरिप्रभुश्रीगुरु-साम्प्रतविजयमानश्रीगच्छनायकश्रीरत्नशेखरसूरिचरणकमलसेविना महोपाध्यायश्रीचारित्ररत्नगणिप्रसादमासादितविद्यालवेन वाचनाचार्यश्रीहेमहंसगणिना स्वपरोपकाराय सुधीशृङ्गारास्य श्रीआरंभसिद्धिवार्तिकं सर्वथा सावद्यवचनविरतैः सुविहिताचार्यवर्यैर्वाच्यमानं चिरं नन्दतात् ॥

अथ ग्रन्थकृत्स्वाभिप्रायं प्रकाशयति, तथाहि—

विद्यारम्भतपःक्रियाप्रभृतिकप्रारम्भवर्गे समे-
ऽप्यारम्भा अशुभाः शुभाश्च नियतं सावद्यतादूषिताः ।
सर्वारम्भविशेषसिद्धिकरणादारम्भसिद्ध्याह्वयो,
ग्रन्थोऽयं तत एव पापकटकायोग्यो विमुक्तारम्भम् ॥ १ ॥

ततश्च—

येन श्रीप्रभुसोमसुन्दरगुरोः काले कलौ सङ्गम-
श्रीमत्तीर्थकरस्य चारु सुचिरं सेवा कृता तस्य च ।
एतज्ज्योतिषवार्तिकप्रणयने भो युज्यते सर्वथा,
ग्रन्थोऽयं तदपीह येन विधिना जातस्तदाकर्ण्यताम् ॥ २ ॥
केचित् क्वचिदपि क्वचित् क्वचिदपि ग्रन्थे विचारा मया
दृष्टा ज्योतिषगोचराः किल समुच्चेतुं च ते चिन्तिताः ।
अकान्तश्च समुच्चयो रचयितुं सत्प्रमाणः पुनः,
सोऽप्यत्र घने घने समभवद्ग्रन्थानुरूपाकृतिः ॥ ३ ॥
मार्गः साऽप्यपरिस्थितापि यदा ग्रन्थस्य रीतिं तदा,
चित्तेऽप्यचिन्ति मया धिया निपुणया सम्यग्विचार्यापि तद् ।

